पारले

# अब पारले पॉपिन्स का मज़ा चलता जाए, भले ही पैकेट खत्म हो जाए...



पारले पॉपिन्स के रैपर भेजिए, धमाकेदार उपहार पाइए.

**मुफ्त** पारले पॉपिन्स के 20 रैपर भेजने पर शरारत भरा पजल किट. पारले पॉपिन्स के 10 रैपर भेजने पर फन पेड और जंगल बुक स्टिकर. पारले पॉपिन्स के 4 रैपर भेजने पर जंगल बुक स्टिकर.

* *पॉपिन्स इस भेंट के बिना भी मिलता है.*




अब फलों के नए-नए स्वाद में

जल्दी करो

everest/94/PP/186-hn

कविहृदयम् -

# जीवने सारभूतानि

**दानं वित्तात् ऋतं वाचः कीर्तिधर्मौ तथायुषः ।**
**परोपकरणं कायात् असारात् सारमावहेत् ।।**

''धनसम्पादनस्य सारः दानम् । वचनस्य सारः सत्यकथनम् । आयुषः सारः कीर्तेः धर्मस्य च कामना । शरीरस्य सारः परोपकारः । अतः मानवाः असारभूतेभ्यः धनादिभ्यः सारभूतानि पूर्वोक्तानि फलानि प्राप्नुयुः ।''

मानवजीवने अपरिहार्यरूपेण शरीरम्, आयुः च प्राप्यते । वाक् अपि प्राप्यते । सम्पत्तिः अपि प्राप्यते । भारतीयं चिन्तनम् अस्ति यत् एतानि सर्वाणि असाराणि इति । अतः एतेषां सदुपयोगः नाम एतेषां साहाय्येन सारभूतानाम् अंशानां सङ्ग्रहः ।

शरीरं न केवलं भोगमात्रैकसाधनम्, अपि तु परोपकारसाधनम् अपि । शरीरात् भोगादिकं तु पशवः अपि प्राप्नुवन्ति । विवेकिना मानवेन किं तावत् एव अपेक्षणीयम् ? न खलु ? यथाशक्ति परोपकारः करणीयः । तेनैव तृप्तिः । महान् अपि भोगः अतृप्तिं वर्धयति, अल्पः अपि परोपकारः तृप्तिं वर्धयति ।

दीर्घकालिकम् आयुः भगवता यत् दत्तं तत् कीर्तेः धर्मस्य च सम्पादनार्थं व्ययीकरणीयम् । कीर्तिः न्यायमार्गाश्रयणात् प्राप्ता स्यात् । पुण्यकार्यादिभिश्च धर्मः सम्पादितः भवति । सन्मार्गे प्रवर्तनात् कीर्तिः धर्मः च प्राप्यते । कीर्तिः इहलोके तृप्तिं जनयति । धर्मश्च परलोके उत्तमां गतिं प्रापयति ।

भावाविष्कारार्थं भगवता दत्ता वाणी मानवेन विविधानाम् उद्देशानां निमित्तम् अपि उपयुज्यते । असत्यकथनम्, वञ्चना इत्यादीनां निमित्तम् उपयुक्ता वाणी किं हितकरी स्यात् ? कदापि न । सत्यकथनार्थं वाण्याः उपयोगः स्वीकरणीयः ।

सम्पत्तिः दानाय एव उपयोक्तव्या । 'आदानं (स्वीकारः) हि विसर्गाय (दानाय)' भवेत् । सम्पत्तेः योग्यः उपयोगः दानम् एव । भोगः स्वार्थाय । सङ्ग्रहः न कदापि विशेषफलाय । अतः परोपकार-कीर्ति-धर्मादीनां सम्पादने पूरकत्वेन धनस्य विनियोगः करणीयः ।

प्रत्येकमानवस्य जीवने सारभूतं किम् इति कविना सम्यक् विवेचनं कृतम् अस्ति अत्र । कविना सूचितानि सर्वाणि तृप्तिजनकानि इत्यतः तानि सारभूतानि । सारभूतस्य स्वीकारः एव विवेकिनां लक्षणम् ।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!





# चन्दमामा

मे - १९९५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं - रू. ५.००

वार्षिकं ग्राहकशुल्कं - रू. ६०.००

# चन्दमामा




संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## बालानाम् आरोग्यम्

सद्यःकाले कृतस्य 'यूनिसेफ' सर्वेक्षणस्य द्वारा केचन अंशाः ज्ञाताः सन्ति । ते च - 'भारतदेशे ४४% बालाः पौष्टिकाहारं न प्राप्नुवन्ति । सामान्यतः १९% बालाः मरणावस्थायां सन्ति । २,२००,००० अपेक्षया अपि अधिकाः बालाः थैराविड्‌रोगेण, ६,६००,००० बालाः दुर्बलशरीरकारणतः च अनारोग्यपीडिताः सन्ति । एतस्य कारणम् - आहारे अयसः अंशस्य अभावः । प्रतिवर्षम् अपि सामान्यतः ९,००० बालाः जन्म प्राप्नुवन्ति । ६०,००० बालाः 'ए'-अन्नाङ्गस्य अभावेन अन्धतां प्राप्नुवन्तः सन्ति । एतैः अंशैः ज्ञायते - २५०,०००,००० जनाः पौष्टिकाहारस्य अभावात्, ३०% जनाः दारिद्र्यपीडिताः च सन्ति' इति ।

बालानाम् आरोग्यवर्धनार्थं यः पौष्टिकाहारः आवश्यकः, तादृशम् आहारं स्वयं सम्पादयितुं ते अशक्ताः इत्यतः एतद्विषये सर्वकारेण महत् दायित्वं निर्वोढव्यम् आपतितम् अस्ति । भारतस्य सर्वाणि अपि राज्यानि बालेभ्यः मध्याह्नाहारस्य दानव्यवस्थां कृतवन्ति सन्ति । एषा व्यवस्था शालाबालानां केवलम् उपयोगाय भवति । अन्येषां बालानां का गतिः ? एतादृशेभ्यः बालेभ्यः आहारवितरणार्थं काश्चन स्वयंसेवासंस्थाः काश्चित् योजनां कृतवत्यः सन्ति । किन्तु एतादृश्याः योजनायाः अपि सुदीर्घकालं यावत् अग्रे नयनं क्लेशाय भवति स्वयंसेवासंस्थानाम् । तत्र क्लेशः नाम धनाभावस्य एव । एतस्य तात्पर्यम् अन्ये बालाः मरणं प्राप्नुयुः इति न ।

एतस्य परिहारः नाम - एकैकः अपि बालः तां शालां प्रविशेत्, यस्यां शालायां किञ्चित्प्रमाणेन वा आहारः, चषकपरिमितं क्षीरं च लभ्येत । तावान् एव आहारः न पर्याप्तः बालेभ्यः । प्रातः सायं च बालेभ्यः पर्याप्तमात्रेण आहारः दातव्यः । तादृशम् आहारं बालानां पोषकाः अल्पमूल्येन यथा प्राप्नुयुः, तथा व्यवस्था कल्पनीया । अपि च वैद्यकीय-व्यवस्था अपि कल्पनीया । रोगस्य आगमनानन्तरम् औषधोपचार-करणापेक्षया रोगः यथा न आगच्छेत्, तथा व्यवस्था करणम् एव वरं खलु ? एतस्मात् औषधोपचारव्ययः अपि अल्पः भविष्यति ।

सम्पुटः - १२ मे - १९९५ सञ्चिका - २

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००

# नामनिर्वचनम् - २२

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।]*

**राजमौलिः** - राजा मौलिः इव राजमौलिः । उपमानोत्तरपदः कर्मधारयः अत्र । मौलिः नाम किरीटः उत्तमाङ्गं (शिरः) वा । तथा हि कोषः - 'मौलिः किरीटे धम्मिल्ले चूडायाम् अनुपुंसकम् । नाशोकद्रौ स्त्रियां भूमौ .....' (मेदिनी) इति । यः राजा किरीटः इव श्रेष्ठः भवति, सर्वेषां राज्ञां मूर्ध्नि स्थितो वा भवति, सः राजमौलिः इति वक्तुं शक्यः । 'राजश्रेष्ठः' इति तात्पर्यम् ।

**चन्द्रमौलिः** - चन्द्रः मौलौ यस्य सः चन्द्रमौलिः । बहुव्रीहिसमासः अत्र । चन्द्रमौलिः परमेश्वरः । त्रिमूर्तिषु अन्यतमः भगवान् ईश्वरः चन्द्रं मौलौ धृतवान् इति कथा सुप्रसिद्धा एव । ईश्वरः चन्द्रं मौलौ (शिरसि) धृतवान् अस्ति इत्यतः सः चन्द्रमौलिः ।

**रोहितः** - रोहति इति रोहितः । [रुह (बीजजन्मादौ) + इतन्] यः वृद्धिं प्राप्नोति सः इति सामान्यः तात्पर्यार्थः । रोहितशब्दस्य रक्तवर्णः इति अर्थः सुप्रसिद्धः । तथा हि कोषः - 'लोहितो रोहितो रक्तः' (अमरः) इति । हरिश्चन्द्रमहाराजस्य पुत्रः रोहिताश्वः अपि रोहितः इति ख्यातः अस्ति । तथा हि मूलम् - 'राजा पुत्रमुखं दृष्ट्वा सुखमाप महत्तरम् । नामास्य रोहितश्चेति चकार विधिपूर्वकम्' इति ।

रक्तवर्णीयः मीनविशेषः अपि रोहितः इति उच्यते । तथा हि भावप्रकाशे -

''रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः ।
रक्तपक्षो झषश्रेष्ठो रोहितः कथितो बुधैः ।'' इति ।

रोहितशब्दस्य रक्तं, कुङ्कुमं, वक्रतारहितम् इन्द्रधनुः इत्यादयः अन्ये अनेके अर्थाः अपि सन्ति । तथा हि कोषः - 'रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोः भेदे रोहितकद्रुमे' इति । (मेदिनी)

---

**सूचना** - भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।

**सङ्केतः** - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु - ५६० ०८५

# स्वीडन्देशे सामाजिकप्रजाप्रभुत्वम्

मातापितरौ उभौ अपि उद्योगार्थं गच्छतः चेत् तयोः, शिशुः यदि अस्वस्थः भविष्यति, तर्हि केन शिशोः पालनं करणीयम् ? एतस्य प्रश्नस्य द्वित्राणि उत्तराणि दातुं शक्नुयाम । किन्तु स्वीडन्सर्वकारः एतस्य कश्चित् उत्तमपरिहारकर्म व्यवहारपथे आनीतवान् अस्ति । पतिपत्न्यौ उभौ अपि यदि उद्योगिनौ स्याताम्, तर्हि शिशोः अनारोग्यसमये पतिः गृहे स्थित्वा शिशोः योगक्षेमं पश्यति । अपि च पतिः कार्यार्थं न गच्छति चेदपि सः कार्यालयं गत्वा कार्यं कृतवान् इत्येव सम्भाव्य सर्वकारः वेतनं ददाति । स्वीडन्देशे प्रजाप्रभुत्वसर्वकारस्य एव शासनम् । अतः एषा व्यवस्था तत्र कर्तुं शक्या । आ बालात् आवृद्धं सर्वासाम् अपि प्रजानाम् आवश्यकतायाः पूरणार्थं, समस्यापरिहारार्थं च यत्नं करोति एषः सर्वकारः । अतः एव निरुद्योगिभ्यः अपि वेतनं दीयते तत्र ।

एतत् कथं साध्यम् इति आश्चर्यं भवेत् । १९३२ तमे वर्षे सोषियल्प्रजाप्रभुत्वपक्षः अधिकारं प्राप्तवान् । तदारभ्य सः एव पक्षः अधिकारं निर्वहन् अस्ति । मध्यकाले षट् वर्षाणि केवलं सः पक्षः अधिकारस्थाने न आसीत् । सोषियल्-प्रजाप्रभुत्वपक्षः अधिकारे स्थिरतां प्राप्य अनन्तरकाले देशस्य प्रगत्यर्थं परिश्रमम् अकरोत् । उद्यमानाम् अभिवृद्ध्यर्थं स्वायत्तसंस्थानाम् अवलम्बनं कृतम् । बहुभ्यः उद्योगावकाशः कल्पितः । सर्वस्तरीयाणाम् अपि हितकरी काचित् योजना करणीया इति विचिन्त्य करः वर्धितः । 'ट्रेड्यूनियन्' निमित्तं यन्त्रागारकर्मकरेभ्यः प्रोत्साहः अपि दत्तः । अतः त्वरितगत्या सर्वक्षेत्रेषु अपि अभिवृद्धिं सम्पाद्य सम्पद्भरितदेशः जातः । तत्रत्याः प्रजाः च सुखेन सन्तोषेण च तृप्तिजीवनम् आरब्धवन्तः ।

किन्तु विरोधपक्षः कन्सर्वेटिव् लिबरल्पक्षः चिन्तितवान् यत् - सर्वकारः प्रजाहितयोजनाः व्यवस्थितं न पालयति इति । १९८६ तमे वर्षे प्रधानमन्त्रिणः ओलाफ् पाल्मेवर्यस्य हननम् अभवत् । इङ्ग्वर्कार्ल्सन्वर्यः सोषियल् डेमोक्रटिक्पक्षस्य नायकः जातः । १९९१ तमे वर्षे प्रवृत्ते निर्वाचने सोषियल् प्रजाप्रभुत्वपक्षः पराजयं प्राप्नोत् । तदा कन्सर्वेटिव् लिबरल्पक्षाः सम्मिलिताः । कार्ल्बिल्ड्वर्यस्य नायकत्वे अधिकारपदवीं स्वीकृतवान् सर्वकारः, पूर्वं याः हितकर्यः योजनाः आसन्, तासां योजनानां निष्कासनम् अकरोत् । उद्यमे सर्वकारस्य भागग्रहणं न्यूनम् अभवत् । एतस्मात् निरुद्योगसमस्या आरब्धा । अतः प्रजाः आन्दोलनं कुर्वत्यः पुनरपि सोषियल्प्रजाप्रभुत्वपक्षस्य अधिकारे आनयनार्थं निवेदनं कृतवत्यः । १९९३ तमवर्षस्य सप्टम्बर्मासे प्रवृत्ते निर्वाचने सोषियल्प्रजाप्रभुत्वपक्षः जयं प्राप्तवान् । कार्ल्सन्वर्यः पुनः प्रधानमन्त्रिपदवीम् आरूढवान् ।

अत्र स्मरणीयः कश्चन विशेषः नाम स्वीडन्देशे यद्यपि महाराजशासनव्यवस्था अस्ति, तथापि महाराजः सर्वकारस्य व्यवहारेषु हस्ताक्षेपं न करोति ।





# वाणिज्यतन्त्रम्

पूर्वं रङ्गनाथनामकः कश्चित् आसीत्। तस्य पिता महाराजस्य आस्थाने उद्योगं कुर्वन् प्रभूतं धनं सम्पादितवान्। सः कदाचित् पुत्रं रङ्गनाथम् उक्तवान् - 'भवान् अपि राज्ञः आस्थाने एव कमपि उद्योगं करोतु' इति। किन्तु रङ्गनाथः एतत् न इष्टवान्, अपि तु सः पितरम् उक्तवान् यत् - अहं वाणिज्यं करोमि इति।

''वाणिज्यम् अस्माकं परम्परागता वृत्तिः न। अतः तया वृत्त्या भवान् प्रगतिं प्राप्तुं न शक्नोति। मम वचनानुसारम् आस्थाने एव उद्योगं करोतु'' इति उक्तवान् पिता।

एतत् वचनं श्रुत्वा पत्ये कुपिता रङ्गनाथस्य माता उक्तवती - ''रङ्गनाथस्य मातुलः वाणिज्यवृत्तौ क्रमशः अभिवृद्धिं प्राप्य प्रभूतं धनं सम्पादितवान् अस्ति। अतः वाणिज्ये अभिवृद्धिः न प्राप्यते इति किमर्थं वदति भवान् ? मम बान्धवानां विषये तावान् तिरस्कारः किमर्थम् ?'' इति।

''भवत्याः अनुजस्य लोकनाथस्य विषये खलु भवती वदन्ती अस्ति ! सः लोकनाथः स्वपुत्रम् एव वाणिज्यरहस्यं न वदति, एवं तर्हि रङ्गनाथं बोधयेत् वा सः ? कुतश्चित् अनुभवः प्राप्तव्यः। वाणिज्ये अनुभवं विना कथं वा प्रगतिः प्राप्तुं शक्या ?'' इति पृष्टवान् रङ्गनाथस्य पिता।

एतत् श्रुत्वा रङ्गनाथस्य माता उक्तवती - ''भवतः चिन्तनानुसारं नास्ति लोकनाथस्य व्यवहारः। पृष्टं चेत् सः सन्तोषेण रङ्गनाथं वाणिज्यरहस्यं वदेत्'' इति।

मातापित्रोः एतं कलहम् अनिच्छन् रङ्गनाथः असमाधानेन उक्तवान् - ''परस्परम् अभिप्रायभेदवतोः भवतोः कलहः एव समाप्तिं न गच्छति। एवं स्थिते मद्विषये चिन्तनं कथं स्यात् भवतोः ? कस्यापि अभिप्रायः न आवश्यकः मम। मम

'अनामिका'

चिन्तनानुसारम् अहं वाणिज्यं कुर्वन् अभिवृद्धिं प्राप्स्यामि एव'' इति।

''महान् सन्तोषः। वाणिज्यम् एव करोतु भवान्। किन्तु मूलधनरूपेण मया एकम् आणकम् अपि न दीयते भवते'' इति उक्तवान् रङ्गनाथस्य पिता।

''अहं दास्यामि धनम्'' इति उक्तवती तस्य माता।

तदा रङ्गनाथः - ''मम ज्ञानम् एव मम वाणिज्यस्य मूलधनम्। वर्षाभ्यन्तरे अहम् उत्तमः वणिक् सन् प्रत्यागमिष्यामि'' इति वदन् गृहात् निर्गतवान्।

मध्येमार्गं कश्चित् संन्यासी मिलितवान्। रङ्गनाथः तं संन्यासिनं नमस्कृत्य, आत्मना उद्दिष्टं कार्यं निवेद्य तं प्रार्थितवान् - ''माम् आशिषा अनुगृह्णातु'' इति।

संन्यासी आशिषा अनुग्रहणम् अङ्गीकृतवान्, किन्तु प्रतिफलरूपेण धनं पृष्टवान्। एतत् श्रुत्वा आश्चर्यचकितः रङ्गनाथः पृष्टवान् - ''सर्वसङ्गपरित्यागिनः धनस्य आवश्यकता का?'' इति।

तदा संन्यासी उक्तवान् - ''धन-सम्पादनार्थम् एव अयं संन्यासिवेषः। यतः अहं न विद्यावान्। कमपि उद्योगं कर्तुम् अपि न समर्थः। अतः अहं संन्यासिवेषं धृत्वा जीवननिर्वहणं कुर्वन् अस्मि'' इति।

''एवं तर्हि संन्यासिवेषं धृत्वा अटनम् अपि किञ्चन वाणिज्यम्'' इति सन्देहं प्रकटयन् उक्तवान् रङ्गनाथः।

तदा संन्यासी - ''अस्मिन् प्रपञ्चे नाम्ना



भेदः स्यात् नाम, किन्तु सर्वम् अपि वाणिज्यम् एव'' इति उक्त्वा क्षणकालं विचिन्त्य पुनः उक्तवान् - ''आवां मिलित्वा वाणिज्यं करवाव। प्राप्तं लाभं समानतया विभज्य स्वीकरवाव'' इति।

रङ्गनाथः अनिच्छया एव संन्यासिनः वचनम् अङ्गीकृतवान्।

अनन्तरदिने एव मार्गपार्श्वे किञ्चन पटगृहं निर्मितम्। संन्यासी धनस्वीकरणपूर्वकं जनानां पापनिवारकः पापानन्दस्वामी सञ्जातः। रङ्गनाथः वेषान्तरं धृत्वा पापानन्दस्वामिनः शिष्यः सञ्जातः।

धुत्थाञ्जने जलांशः भवति इत्यतः तत् नीलवर्णीयं भवति। धुत्थाञ्जनस्य उष्णीकरणेन जलांशः अपगतः भवति,

वर्णश्च श्वेतः भवति । श्वेतधुत्थाञ्जनम् आवरणं विना बहिः स्थाप्यते चेत्, पुनरपि जलांशं गृहीत्वा तत् नीलवर्णतां प्राप्नोति । एतत् सूत्रम् आधारीकृत्य योजनां सज्जीकृतवान् संन्यासी ।

पापानन्दस्वामिनः दक्षिणपार्श्वे श्वेतधुत्थाञ्जनचूर्णं भवति । वामपार्श्वे उष्ण पिष्टपचनमेकम् अस्ति । यः स्वपापं निवारयितुम् इच्छन् आगच्छति, तस्य हस्ते किञ्चित् श्वेतधुत्थाञ्जनचूर्णं स्थापयित्वा रङ्गनाथः तं नेत्रनिमीलनं कर्तुं वदति । केषुचित् एव क्षणेषु तत् चूर्णं नीलवर्णतां प्राप्नोति ।

''भवतः शरीरस्थं पापं विषरूपतां प्राप्य अस्मिन् चूर्णे प्रविष्टम् अस्ति । नेत्रे उन्मील्य पश्यतु'' इति वदति रङ्गनाथः ।

पापी नेत्रे उन्मील्य पश्यति । आत्मना कृतं पापं चिन्तयन् सः भयात् कम्पते । अनन्तरं सः तत् चूर्णं संन्यासिनः हस्ते स्थापयति । संन्यासी नेत्रे निमील्य मन्त्रोच्चारणपूर्वकं तत् चूर्णं पार्श्वस्थे उष्णपिष्टपचने स्थापयति । केषुचित् एव क्षणेषु तत् चूर्णं श्वेतवर्णतां प्राप्नोति । 'भवान् इदानीं पापमुक्तः जातः । अतः गन्तुम् अर्हति भवान्' इति वदति संन्यासी ।

आत्मानं पापमुक्तं चिन्तयन् सः तृप्त्या ततः निर्गच्छति । संन्यासी मुष्टिपरिमितस्य चूर्णस्य निमित्तम् एकं रूप्यकं स्वीकरोति ।

सकृत् आगतः पुनः पुनः आगच्छेत् इति आशया संन्यासी आगतान् उद्दिश्य एवं वदति स्म – ''मानवः पापकारणात् एव मानवजन्म प्राप्नोति । यथाशक्ति भवतां



पापनिवारणार्थम् एव अहम् अत्र आगतवान् अस्मि'' इति।

संन्यासिनः एतत् वचनं श्रुत्वा जनाः पुनः पुनः तस्य समीपम् आगच्छन्ति स्म। प्रतिदिनम् अपि मार्गपार्श्वस्थस्य पटगृहस्य समीपे जनसम्मर्दः भवति स्म एव।

कानिचन दिनानि अतीतानि। कदाचित् रङ्गनाथः संन्यासिनम् उक्तवान् - ''एतावता एव आवाभ्यां प्रभूतं धनं सम्पादितम् अस्ति। अतः इदानीम् अस्माकं वाणिज्यस्य स्थगनम् एव उचितम्'' इति।

किन्तु संन्यासी रङ्गनाथस्य वचनं निराकुर्वन् उक्तवान् - ''आवाभ्याम् इतोऽपि बहु सम्पादनीयम्'' इति।

तदा रङ्गनाथः उक्तवान् - ''यदि दुराशा भवति, तर्हि आवां वञ्चितौ भवेव। जनाः कदाचित् वा आवयोः अव्यवहारम् अवश्यं ज्ञातुं शक्नुवन्ति। अतः इदानीम् एव एतस्य वाणिज्यस्य स्थगनं क्षेमाय'' इति।

एतत् श्रुत्वा कुपितः संन्यासी - ''इतः अन्यत्र गत्वा एतत् एव वाणिज्यं करवाव इति अहं चिन्तयन् अस्मि। किन्तु भवान् वाणिज्यम् एव स्थगयाव इति वदन् अस्ति'' इति वदन् सम्पादितं धनं गणितवान्। आहत्य तत्र लक्षं रूप्यकाणि आसन्।

संन्यासी रङ्गनाथाय पञ्चाशत्सहस्रं रूप्यकाणि दातुम् उद्युक्तः। किन्तु रङ्गनाथः तावत् धनं स्वीकर्तुम् अनिच्छन् उक्तवान् - ''भवता कृतस्य पापस्य अर्धभागं स्वीकर्तुं न इच्छामि अहम्। अतः मह्यं पञ्चसहस्रं रूप्यकाणि केवलं ददातु'' इति।

अनन्तरं रङ्गनाथः पञ्चसहस्रं रूप्यकाणि





स्वीकृत्य स्ववेषं परिवृत्त्य मातुलस्य ग्रामं प्रसादपुरं प्रति प्रस्थितः।

रङ्गनाथः प्रसादपुरं प्राप्य मातुलस्य लोकनाथस्य धान्यापणं गतवान्। तस्मिन् समये लोकनाथः आपणे एव आसीत्। वेषान्तरं धृतवन्तं माम् अभिज्ञातुं मातुलः शक्नुयात् वा न वा इति चिन्तयन् रङ्गनाथः धान्यापणं गत्वा 'मह्यं खर्जूरम् आवश्यकम्' इति उक्तवान्।

लोकनाथः रङ्गनाथं न अभिज्ञातवान्। अपि तु सः रङ्गनाथं पृष्टवान् - ''भवतः अन्यत् किमपि आवश्यकं वा ?'' इति।

''बहूनि वस्तूनि आवश्यकानि। किन्तु खर्जूरम् अस्ति वा न वा इति वदतु'' इति उक्तवान् रङ्गनाथः।

अनुक्षणं लोकनाथः 'शङ्कर !' इति आहूतवान्। आपणस्य अन्तर्भागात् कश्चित् युवकः आगतवान्। लोकनाथः आगतं शङ्करम् उद्दिश्य - 'अन्तः खर्जूराणि सन्ति वा ?' इति पृष्टवान्।

शङ्करः - 'आम्। खर्जूराणि सन्ति' इति उक्तवान्।

तदा लोकनाथः शङ्करम् उक्तवान् - 'तर्हि एतस्मै खर्जूरं ददातु' इति।

स्वामिनः वचनम्अङ्गीकृत्य शङ्करः अन्तः गतवान्।

अनन्तरं लोकनाथः 'गोपाल !' इति कश्चित् आहूतवान्। तदा कश्चित् बालः आगतवान्। लोकनाथः रङ्गनाथं दर्शयन् तम् उक्तवान् - ''एतस्मै यानि वस्तूनि आवश्यकानि, तानि ददातु'' इति।

किञ्चित्कालानन्तरं शङ्करः आगत्य लोकनाथम् उक्तवान् - ''गोणीपरिमितं खर्जूरम् आसीत्। किन्तु इदानीं सा गोणी एव न दृश्यते'' इति।

एतत् श्रुत्वा लोकनाथः कोपेन - ''नास्ति इति कथनार्थम् एतावान् समयः आवश्यकः वा ? एतेन वृथा प्रतीक्षणीयम् आपतितम्'' इति उक्त्वा रङ्गनाथम् उद्दिश्य उक्तवान् - ''कृपया क्षमां करोतु। मम कर्मकरः वदति खर्जूरं नास्ति इति। किन्तु भवतः समयः व्यर्थः जातः इति मा चिन्तयतु। यतः मम आपणे यत् नास्ति, तत् अन्यत्र कुत्रापि न लभ्यते'' इति।

तदा रङ्गनाथः कोपेन उक्तवान् - ''एतत्

एव वचनं पूर्वम् एव उक्तं यदि स्यात् तर्हि उपकारः अभविष्यत्'' इति।

एतत् श्रुत्वा लोकनाथः रङ्गनाथं सान्त्वयन् उक्तवान् - ''किं कर्तुं शक्यते स्वामिन् ! शङ्करः अनाथः। तदीयः इति कोऽपि नास्ति। उदरपोषणार्थम् अन्यः मार्गः नास्ति। भिक्षावृत्तेः अवलम्बनं तु लज्जास्पदम्। 'परिश्रमेण कार्यं कृत्वा जीवननिर्वहणं करोमि' इति सः वदति। अतः अहं शङ्करं मम कर्मकरत्वेन नियोजितवान् अस्मि। तस्य परतया अहं क्षमां प्रार्थयामि'' इति।



मातुलस्य लोकनाथस्य सुदीर्घं विवरणं श्रुत्वा रङ्गनाथः - 'मातुलः महान् वणिक् एव' इति चिन्तयन् लोकनाथम् उद्दिश्य - ''भवतः कर्मकरः शङ्करः एतद्ग्रामीणं वणिजं लोकनाथं जानाति खलु ! यतः मया क्रीतानि एतानि वस्तूनि लोकनाथस्य गृहं प्रति प्रापणीयानि। सः लोकनाथः मम मातुलः'' इति उक्त्वा ततः गन्तुम् उद्युक्तः।

एतत् श्रुत्वा लोकनाथः आश्चर्येण - ''भवान् रङ्गनाथः खलु ! भवन्तम् अभिज्ञातुम् एव न शक्तः अहम्। चलतु, गृहं गच्छाव'' इति वदन् प्रस्थितः।

तदा रङ्गनाथः आश्चर्येण - ''भवान् आपणं परित्यज्य आगच्छति वा ? सः शङ्करः चतुरः न खलु !'' इति पृष्टवान्।

एतत् श्रुत्वा लोकनाथः मन्दहासपूर्वकम् उक्तवान् - ''एतत् सर्वं वाणिज्यतन्त्रम्। शङ्करः वस्तुतः अत्यन्तं चतुरः विश्वासार्हः च'' इति।

''एवं तर्हि खर्जूरविषये किमर्थं तथा व्यवहृतवान् शङ्करः ?'' इति पृष्टवान् रङ्गनाथः।

तदा लोकनाथः उक्तवान् - ''खर्जूरं नास्ति इति यदि उच्यते तर्हि आगतः ग्राहकः अन्यानि वस्तूनि अस्वीकृत्य एव प्रतिगच्छति। एतस्मात् आपणिकस्य महती हानिः। भवतः अन्यानि अपि वस्तूनि आवश्यकानि आसन् खलु ! गोपालः भवता सूचितानां वस्तूनां बन्धनं कुर्वन् आसीत्। तावता शङ्करः खर्जूरनिमित्तं पञ्चषान् आपणान् गत्वा आगतवान्। किन्तु कस्मिन् अपि आपणे खर्जूरं न प्राप्तम्'' इति।

एतत् श्रुत्वा रङ्गनाथः क्षणकालं

विचिन्त्य - ''तर्हि वाणिज्यम् अपि वञ्चना एव । आयः अपि अल्पः । अहम् अन्येन केनचित् सह वाणिज्यं कृतवान् । आवाभ्यां मासद्वयाभ्यन्तरे एव प्रभूतं धनं सम्पादितम् । एतेन क्रमेण तावतः धनस्य सम्पादनं नाम एकं वर्षं भवेत्'' इति उक्त्वा आत्मना कृतं सर्वं विस्तरेण उक्तवान् ।

तदा लोकनाथः मन्दहासपूर्वकम् उक्तवान् - ''यदि वयं ग्राहकेभ्यः उत्तमानि वस्तूनि न दद्मः, तर्हि सा वञ्चना इत्युच्यते । ग्राहकाणाम् आसक्तिम् आवश्यकताः च ज्ञात्वा उद्देशपूर्वकं मूल्यस्य वर्धनं वञ्चना । अहं तादृशं वञ्चनायुतं वाणिज्यं न करोमि । किन्तु ये मम परिचिताः ग्राहकाः सन्ति, तान् कदापि न दूरीकरोमि अहम्'' इति ।

एतत् श्रुत्वा रङ्गनाथः उक्तवान् - ''इदानीम् अहं चिन्तयन् अस्मि यत् - वाणिज्यार्थं मम बुद्धेः उपयोगं करोमि, उत वञ्चनार्थम् इति । अपि च 'अहं मम स्वज्ञानेन एव वाणिज्यं कुर्वन् प्रगतिं प्राप्स्यामि' इति मम मातापितरौ सगर्वम् उक्त्वा आगतवान् अस्मि'' इति ।

तदा लोकनाथः आत्मीयतया रङ्गनाथस्य स्कन्धं गृहीत्वा उक्तवान् - ''वञ्चनया धनसम्पादनेन तृप्तिः न अनुभूयते । भवान् प्रामाणिकतया वाणिज्यं करोतु । यद्यपि मम अधिकलाभयुतः आभरणापणः अस्ति, तथापि सुवर्णाभरणानाम् आपणदायित्वं पुत्राय दत्त्वा जनानां साहाय्यार्थम् एव अहं धान्यापणं निर्वहन् अस्मि । भवता न पृष्टं चेदपि अहं वाणिज्यविषये मम अभिप्रायम् उक्तवान् । अतः मत्तः भवान् इतोऽपि वाणिज्यरहस्यानि ज्ञात्वा स्ववाणिज्ये प्रगतिं प्राप्तुं शक्नोति'' इति ।

लोकनाथस्य मार्गदर्शनेन रङ्गनाथः वाणिज्यम् आरब्धवान्, वर्षाभ्यन्तरे एव महतीं प्रगतिं प्राप्तवान् च । अनन्तरं सः मातापित्रोः समीपं गत्वा प्रवृत्तं सर्वं तौ निवेदितवान् । एतस्मात् रङ्गनाथस्य मातापितरौ अतीव सन्तुष्टौ ।

अनन्तरकाले रङ्गनाथः मातुलस्य पुत्रीं परिणीय सुखेन जीवनं यापितवान् ।






(नव वर्षाणि यावत् ट्राय्-ग्रीक्जनानां मध्ये यद्यपि संघर्षः प्रचलन् एव आसीत्, तथापि घोरयुद्धं तु न प्रवृत्तम् । अत्रान्तरे ग्रीक्योधः वज्रकायः ट्राय्राजकुमार्यां प्रमोदिन्याम् अनुरक्तः अभवत् । यदि सः ग्रीक्पक्षं त्यजति तर्हि एव प्रमोदिन्या सह परिणयः शक्यते इति वीरसिंहः वज्रकायम् उक्तवान् । वज्रकायः केनापि व्याजेन ग्रीक्राजविषये कुपितः सन् युद्धरङ्गात् निर्गतः । अनुक्षणं ट्राय्सैनिकाः साहसेन पराक्रमेण च ग्रीक्जनान् सम्मुखीकुर्वन्तः तेषां नौकाः दग्धवन्तः । अनन्तरम् .....)

चन्द्रप्रभस्य ज्वलन्तीं नौकां दृष्ट्वा वज्रकायः क्रुद्धः । पूर्वं सः 'ग्रीक्परतया युद्धं न करिष्यामि' इति प्रतिज्ञां कृत्वा युद्धरङ्गात् निर्गतः आसीत् । तथापि ज्वलन्तीं नौकां दृष्ट्वा क्षणमेकं सः आत्मना कृतां प्रतिज्ञाम् अपि विस्मृत्य ग्रीक्जनानां साहाय्यार्थं स्वसैन्यं प्रेषितवान् ।

अत्रान्तरे पितृकीर्तिनामकः ग्रीक्वीरः ज्वलन्तीं नौकां परितः स्थितानां ट्राय्सैनिकानां मध्ये आगत्य बलात् शूलमेकं क्षिप्तवान् । तेन शूलेन ताडितः कश्चित् ट्राय्वीरः अधः पतितवान् । एतत् दृष्ट्वा ट्राय्सैनिकाः चिन्तितवन्तः - 'वज्रकायः एव पुनः युद्धरङ्गम् आगतवान्' इति । वज्रकायः नाम ट्राय्जनानां दृष्ट्या सिंहसदृशः । ते वज्रकायस्य आगमन-चिन्तनात् एव भीताः सन्तः ततः पलायितवन्तः । धैर्यवचनैः ट्राय्जनान्



प्रेरयितुं कोऽपि योधः न आसीत् तस्मिन् समये । दौर्भाग्यवशात् वीरसिंहः अपि भूदेवात् व्रणितः सन् ततः पूर्वम् एव युद्धरङ्गात् ट्रायनगरं प्रति गतवान् आसीत् ।

पितृकीर्तिः ट्रायसैनिकान् बहुधा पीडितवान् । चन्द्रप्रभस्य ज्वलन्तीं नौकां निर्वाप्य धावतः ट्रायसैनिकान् अनुसृत्य पितृकीर्तिः धावितवान् । पितृकीर्तिः वज्रकायस्य कवचं धृतवान् आसीत् । अतः ट्रायसैनिकाः चिन्तितवन्तः यत् - पितृकीर्तिः एव वज्रकायः इति ।

तस्मिन् दिने एव ट्रायनगरं कथमपि स्वायत्तीकरणीयम् इति निर्णीतवान् पितृकीर्तिः । सः नगरं परितः या दुर्गभित्तिः आसीत्, तां भित्तिम् आरोढुं त्रिवारं यत्नं कृतवान् । किन्तु ट्रायसैनिकैः निवार्यमाणः सः भित्तेः आरोहणे सफलः न जातः ।

सर्वत्र अन्धकारः प्रसृतः चेदपि युद्धं तु प्रचलत् एव आसीत् । अन्धकारे पितृकीर्तेः पृष्ठे केनचित् ताडितम् । तदा तस्य शिरस्त्राणम् अधः पतितम् । तस्य हस्ते विद्यमानं शूलं भग्नम् अभवत् । तदा सः असहायः सञ्जातः । कश्चित् ट्रायवीरः पितृकीर्तेः एतां परिस्थितिम् एव प्रतीक्षमाणः आसीत् । सः पितृकीर्तेः अपरपार्श्वे ताडितवान् । पितृकीर्तिः निरायुधः सन् निश्शक्त्या युद्धरङ्गात् निर्गच्छन् आसीत् । तदा वीरसिंहः बलात् ताडयित्वा पितृकीर्तिं मारितवान् । अनन्तरं वीरसिंहः पितृकीर्तिना धृतं कवचं स्वीकृतवान् ।

पितृकीर्तेः मरणं ज्ञात्वा तत्र आगतौ प्रताप-भूदेवौ, पितृकीर्तिशवं ट्रायसैनिकाः यथा न स्वायत्तीकुर्युः तथा रात्रिपर्यन्तं रक्षित्वा अनन्तरं स्वनौकास्थानसमीपं नीतवन्तौ ।

पितृकीर्तेः मरणवार्तां श्रुत्वा दुःखं सोढुम् अशक्तः वज्रकायः भूमौ पतित्वा रोदनं कृतवान् । वज्रकायस्य माता तटिनी पुत्रस्य निमित्तं नूतनं कवचमेकं निर्माय दत्तवती ।

वज्रकायः मात्रा दत्तं कवचं धृत्वा राज्ञः समीपं गतवान्, समाहितः अभवत् च । अनन्तरं सः पितृकीर्तिमरणात् उत्पन्नस्य द्वेषस्य प्रतीकारं साधयितुम् इच्छन् युद्धभूमिं प्रति प्रस्थितः ।

कोपाविष्टः वज्रकायः प्रलयरुद्रः इव युद्धम् आरब्धवान् । तस्य आक्रमणं सोढुम् अशक्ताः ट्राय्सैनिकाः इतस्ततः विकीर्णाः सन्तः ततः पलायनं कृतवन्तः । वज्रकायः पलायमानान् ट्राय्सैनिकान् अनुसृत्य स्कामुन्दर्नदीपर्यन्तम् अपि धावितवान् । स्कामुन्दर्नदीतीरे बहून् ट्राय्सैनिकान् मारितवान् वज्रकायः । ततः कथञ्चित् आत्मानं रक्षन्तः केचन ट्राय्सैनिकाः ट्राय्नगरं प्रति पलायिताः ।

वज्रकायः ग्रीक्वीरेषु एव अग्रगण्यः आसीत् । ट्राय्सैनिकेषु अग्रगण्यः वीरसिंहः । किन्तु तयोर्मध्ये एतावत्पर्यन्तम् अपि युद्धं न आरब्धम् । इदानीं तौ परस्परं युद्धम् आरब्धवन्तौ । तयोः परस्परयुद्धस्य परिणामः कीदृशः स्यात् इति कुतूहलेन द्रष्टुम् इच्छन्तः उभयपक्षीयाः अपि युद्धं स्थगितवन्तः ।




आरम्भे वीरसिंहः वज्रकायं न सम्मुखीकृतवान्, अपि तु वज्रकायात् दूरं गतवान् । वज्रकायः वीरसिंहम् अनुसृत्य गतवान् । एवं वज्रकायात् दूरं गच्छतः वीरसिंहस्य आशयः आसीत् – 'वज्रकायः बहुभ्यः दिनेभ्यः युद्धे भागं न गृहीतवान् इत्यतः युद्धकरणं किञ्चिदिव विस्मृतं भवति । माम् अनुसरन् यदि सः धावति, तर्हि शीघ्रातिशीघ्रम् एव श्रान्तः भवति । तेन च सः पराजयं प्राप्नोति' इति ।

किन्तु वीरसिंहस्य चिन्तनानुगुणं किमपि न जातम् । वज्रकायेन ट्राय्भित्तिं परितः त्रिवारं धावितं चेदपि सः किञ्चिदपि न श्रान्तः । अतः वीरसिंहः अनन्यगतिकः सन् धावनं स्थगयित्वा वज्रकायं सम्मुखीकृतवान् । आत्मनः उपरि आक्रमणार्थम् आगच्छन्तं वीरसिंहं वज्रकायः उरसि बलेन ताडितवान् । अनुक्षणं वीरसिंहः अधः पतितवान् । 'मम शरीरं कृपया ट्राय्जनेभ्यः अर्पयतु' इति वज्रकायं प्रार्थयन् एव वीरसिंहः प्राणान् त्यक्तवान् ।

किन्तु वज्रकायः वीरसिंहस्य अन्तिमम् आशयम् अपि न पुरस्कृतवान् । अपि तु सः वीरसिंहस्य कवचं स्वीकृत्य वीरसिंहस्य पादौ रज्ज्वा स्वरथे बद्धवान्, रथं च स्वनौकास्थानसमीपं नीतवान् ।

एवंप्रकारेण द्वेषं साधितवान् वज्रकायः

पितृकीर्तेः शवसंस्कारादिकं कृत्वा, तस्य शवस्थानसमीपे अश्वान्, उभौ शुनकान्, द्वादश ट्राय्युद्धबन्दिनः च बलिरूपेण समर्पितवान्। एवं बलिरूपेण मृतेषु वर्धनस्य पुत्राः अपि केचन आसन्। वज्रकायः क्षणं यावत् चिन्तितवान् यत् - वीरसिंहस्य शवं पितृकीर्तेः शुनकेभ्यः दास्यामि इति। किन्तु अनन्तरं सः तच्चिन्तनं परित्यक्तवान्।

पितृकीर्तेः अन्त्यसंस्कारसमये नृत्य-गीतकार्यक्रमाः प्राचलन्। रथस्पर्धायां देवमयः विजयी जातः। मल्लयुद्धे रूपधरः भूदेवः च समानवीरौ इति निर्णयः अभवत्।

एतावता अपि वज्रकायस्य कोपः न शान्तः। सः प्रतिदिनम् अपि प्रातः उत्थाय वीरसिंहस्य शवं पितृकीर्तेः शवस्थानं परितः त्रिवारम् इतस्ततः आकर्षति स्म, तेन च आनन्दम् अनुभवति स्म।

कदाचित् रात्रौ ट्राय्राजः वर्धनः पुत्रस्य वीरसिंहस्य शवं नेतुम् इच्छन् ग्रीकशिबिरं गत्वा वज्रकायस्य पटगृहं प्रविष्टवान्। वर्धनस्य आगमनसमये वज्रकायः गाढनिद्रायाम् आसीत्। वर्धनः सुलभतया वज्रकायस्य मारणं कर्तुम् अशक्ष्यत्। किन्तु वर्धनः तादृशं चिन्तनम् अकृत्वा उदारतया व्यवहृतवान्।

किञ्चित्कालानन्तरं वज्रकायः जागरणं प्राप्य उत्थितवान्। अनन्तरं वर्धन-वज्रकाययोः मध्ये परस्परं कुशलसम्भाषणं प्रवृत्तम्। वर्धनः स्वकीयम् आगमनोद्देशं वज्रकायं विवृतवान्। बहुकालं यावत् चर्चा प्रवृत्ता। अन्ते सन्धिः जातः यत् - वीरसिंहस्य भारः यावान् अस्ति, तावत्



सुवर्णं वर्धनेन वज्रकायाय दत्त्वा, पुत्रस्य शवः स्वीकरणीयः इति। वर्धनः अपि एतत् अङ्गीकृतवान्। अनन्तरं ट्रायभित्तेः बहिर्भागे काचित् तुला सज्जीकृता ग्रीकूजनैः।

तुलायाः एकस्यां स्थालिकायां वीरसिंहस्य कलेवरं स्थापितम्। अपरत्र च बहूनि सुवर्णाभरणानि स्थापितानि ट्रायसैनिकैः। तथापि वीरसिंहस्य कलेवरम् एव किञ्चित् भारयुतम् आसीत्। तदा वर्धनस्य पुत्री प्रमोदिनी आत्मना हस्तयोः धृतानि कङ्कणानि निष्कास्य तुलायां स्थापितवती।

वज्रकायः ततः पूर्वम् एव प्रमोदिन्यां नितराम् अनुरक्तः आसीत्। सः प्रमोदिन्याः व्यवहारं दृष्ट्वा वर्धनम् उक्तवान् - "अहं भवदीयं सुवर्णं न इच्छामि। अहं प्रमोदिनीं परिणेतुम् इच्छामि। अतः प्रमोदिनीं मह्यं ददातु, भुवनसुन्दरीं च प्रतापाय ददातु। एवं चेत् वयं युद्धं स्थगयित्वा सन्धिं कर्तुम् अपि सिद्धाः" इति।

तदा वर्धनः उक्तवान् - "यदि भवान् प्रमोदिन्याम् अनुरक्तः, तर्हि तां परिणेतुम् अर्हति। किन्तु भुवनसुन्दर्याः प्रत्यर्पणं सर्वथा नास्ति। यदि भवान् एतां व्यवस्थाम् इच्छति, तर्हि सन्ध्यर्थं व्यवस्थां करोतु" इति।

"एतद्विषये प्रयत्नं करोमि" इति उक्तवान् वज्रकायः।

अनन्तरं वर्धनः पुत्रस्य वीरसिंहस्य कलेवरं स्वीकृत्य ट्रायनगरं नीत्वा यथाविधि शवसंस्कारं कृतवान्। तस्मिन् समये ट्रायजनाः दुःखं सोढुम् अशक्ताः उच्चैः क्रन्दनं कृतवन्तः। वीरसिंहस्य मरणात् ट्रायजनाः





प्रमोदिनीविषयकेण अनुरागेण वज्रकायः स्वदक्षिणपादे मरणम् अस्ति इति विषयं प्रमोदिनीम् उक्तवान् । वज्रकायस्य माता तटिनी तस्य शैशवावस्थायां तस्य दक्षिणपादं गृहीत्वा तं नद्यां मज्जितवती आसीत् ।

कदाचित् प्रमोदिनी वज्रकायम् उक्तवती - "भवान् निरायुधः सन् पादरक्षाम् अधृत्वा सूर्यदेवालयम् आगच्छतु । तत्र सूर्याय बलिं दत्त्वा आवयोः विवाहनिश्चयं करवाव" इति ।

प्रमोदिन्याः वचनानुसारं वज्रकायः निरायुधः सन् पादरक्षाम् अधृत्वा सूर्यदेवालयं गतवान् । तत्र प्रमोदिनी, तस्याः केचन आप्तबान्धवाश्च आसन् । प्रमोदिन्याः अग्रजः अरिभयङ्करः वज्रकायेन सह अत्यन्तम् आत्मीयतया व्यवहरन् तं दृढम् आलिङ्गितवान् । तस्मिन् एव समये मोहनः विग्रहस्य पृष्टभागे स्थित्वा वज्रकायस्य दक्षिणपादे विषपूर्णं बाणमेकं प्रयुक्तवान् । किन्तु वज्रकायः अनुक्षणं न मृतः । अपि तु सः आलयस्थात् अग्निकुण्डात् दीपस्तम्भद्वयं गृहीत्वा तत्रत्यान् ट्रायजनान् निर्दयं ताडितवान् । एतस्मात् केचन ट्रायजनाः, देवालयस्थाः केचन कर्मकराः च मरणं प्राप्तवन्तः ।

अत्रान्तरे ग्रीकशिबिरस्थानां रूपधरस्य, भूदेवस्य, अन्येषां केषाञ्चित् योधानां च सन्देहः उत्पन्नः यत् - वज्रकायः किमपि कुतन्त्रम् आचरन् अस्ति इति । प्रमोदिनी दीयते चेत् युद्धस्थगनं कुर्मः इति वज्रकायेन सर्वे दुःखतप्ताः अभवन् ।

वज्रकायः प्रमोदिनीं परिणेतुम् इच्छन् युद्धस्थगनप्रयत्ने उद्युक्तः इत्यतः स्वयम् एव स्वस्य मरणस्य कारणीभूतः अभवत् । वज्रकायविषये प्रमोदिन्याः अनुरागः सर्वथा न आसीत् । तथापि केनापि प्रकारेण युद्धं स्थगितं भवतु इति उद्देशेन एव प्रमोदिनी वज्रकायेन सह विवाहम् अङ्गीकृतवती इव व्यवहृतवती । वज्रकायस्य विषये तस्याः कोपः आसीत् एव । यतः वज्रकायेन प्रमोदिन्याः अग्रजः इलियट् हिंसापूर्वकं मारितः आसीत् ।

प्रमोदिनी वज्रकाये अनुरक्ता इव व्यवहरन्ती, तेन सह अनुरागेण सल्लापं कुर्वती तस्य प्राणरहस्यं ज्ञातवती ।

वर्धनाय यत् वचनं दत्तं, तत् रूपधरादयः अन्ये च न जानन्ति स्म । वज्रकायः सूर्यदेवालयं प्रति एकाकी एव प्रस्थितः इति ज्ञात्वा रूपधरादयः ग्रीक्योधाः वज्रकायस्य कुतन्त्रं ज्ञातुम् इच्छन्तः सूर्यदेवालयं प्रतिगतवन्तः ।

यावत् रूपधरादयः सूर्यदेवालयं प्रविष्टवन्तः, तावता मोहनः अरिभयङ्करः च देवालयात् बहिः आगच्छन्तौ आस्ताम् । अनन्तरं रूपधरः, भूदेवः, देवमयः च आलयं प्रविश्य आसन्नमरणं वज्रकायं दृष्टवन्तः । आगतान् रूपधरादीन् दृष्ट्वा वज्रकायः तान् उद्दिश्य - "यदि ट्रायनगरम् अस्माभिः स्वायत्तीकृतं भविष्यति, तर्हि मम शवस्थानसमीपे प्रमोदिनीं बलिरूपेण मारयन्तु । एषः एव मम अन्तिमः आशयः" इति वदन् प्राणान् त्यक्तवान् ।

बलवान् भूदेवः वज्रकायस्य शरीरं स्वस्कन्धयोः उपरि स्थापयित्वा देवालयात् बहिः गतवान् । रूपधरः देवमयः च भूदेवम् अनुसृतवन्तौ ।

वज्रकायस्य कलेवरं स्वायत्तीकरणीयम् इति ट्रायसैनिकाः बहुधा प्रयत्नं कृतवन्तः । किन्तु ग्रीकवीराः ट्रायसैनिकान् सम्मुखीकुर्वन्तः वज्रकायस्य कलेवरं स्वनौकास्थानसमीपं नीतवन्तः ।

पुत्रस्य वज्रकायस्य मरणात् तटिनी अतीव दुःखिता । तटिनी, अन्ये ग्रीक्योधाः च सप्तदश दिनानि यावत् शोकम् आचरितवन्तः । ते अष्टादशे दिने वज्रकायस्य कलेवरम् अग्निना दग्धवन्तः । तस्य अस्थीनि पितृकीर्तेः अस्थीनि च सुवर्णपात्रे संस्थाप्य, तत्र पात्रं ट्रायनगर-समुद्रयोः मध्ये कस्मिंश्चित् प्रदेशे निखननं कृत्वा, तदुपरि कश्चित् शिलाराशिः स्थापितः । एतस्य शिलाराशेः समीपस्थः ग्रामः वज्रकायनाम्ना घोषितः अभवत् । अपि च तस्मिन् ग्रामे वज्रकायनाम्नि आलयमेकं निर्माय तस्मिन् आलये वज्रकायस्य शिलाप्रतिमा स्थापिता । अद्यापि वज्रकायप्रतिमा तस्मिन् आलये अस्ति ।

(अनुवर्तते)



# सुवर्णाभरणानां विक्रयणम्

**श**ङ्करपुरस्य केशवः स्वपुत्रीं तद्ग्रामीणाय एव शिवशङ्कराय दत्त्वा विवाहं निर्वर्तितवान्। विश्वनाथः केशवस्य स्नेहितः। सः केशवस्य पुत्र्याः विवाहसमये तीर्थक्षेत्रं गतवान् आसीत् इत्यतः विवाहार्थम् आगन्तुं न शक्तवान्।

विवाहकार्यक्रमस्य समाप्त्यनन्तरं विश्वनाथः केशवस्य गृहम् आगतवान्, पृष्टवान् च - ''भवतः पुत्र्याः विवाहार्थम् आगन्तुं न शक्तः अहम्। भवतः जामाता कम् उद्योगं कुर्वन् अस्ति ?'' इति।

तदा केशवः खेदेन एव उक्तवान् - ''सुवर्णाभरणानां विक्रयणं करोति'' इति।

''सुवर्णवाणिज्यं वा ? एतं विषयं वक्तुं खेदः किमर्थम् ?'' इति पृष्टवान् विश्वनाथः आश्चर्येण।

तद्विषये केशवः पुनः किमपि न उक्तवान्। अनन्तरं तौ किञ्चित्कालं यावत् परस्परं कुशलसम्भाषणं कृतवन्तौ। विश्वनाथस्य आशयानुसारं केशवः जामातुः भावचित्रं स्नेहिताय दर्शितवान्। अनन्तरं विश्वनाथः ततः गतवान्।

तस्मिन् दिने सायङ्काले विश्वनाथः स्वपरिचितस्य कोदण्डरामस्य सुवर्णाभरणापणे उपविष्टवान् आसीत्। तदा कश्चित् युवकः तत्र आगत्य रत्नहारमेकं विक्रेतुम् इच्छन् आपणिकाय दर्शितवान्। तस्य मुखदर्शनात् विश्वनाथः ज्ञातवान् यत् - एषः एव मित्रस्य केशवस्य जामाता इति। सः युवकः यं रत्नहारं विक्रेतुम् इष्टवान् आसीत्, सः हारः केशवेन पुत्र्याः निमित्तं कारितः आसीत्।

एतत् दृष्ट्वा विश्वनाथः अवगतवान् - 'जामाता सुवर्णाभरणानां विक्रयणं करोति इति केशवः खेदेन किमर्थम् उक्तवान् आसीत्' इति।





# विवेकयुतः निर्णयः

साहसशीलः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः बेतालः अवदत् - ''अये राजन् ! महता कष्टेन आरब्धे कार्ये भवान् यशः प्राप्तुम् इच्छति इति यत्, तदर्थं च मध्यरात्रसमये अस्मिन् भीतिजनके अपि श्मशाने महान्तं परिश्रमं वहन् अस्ति इति यत् तेन अहम् अत्यन्तम् आश्चर्यम् अनुभवामि । किन्तु एतावन्तं परिश्रमं कृत्वा अपि भवान् तृप्तिम् अनुभोक्तुं शक्नोति वा ? अथवा सुवर्णपुरस्य राजकुमारी इव अविवेकेन व्यवहरन् भवान् साधितम् अपि फलं परित्यजेत् वा इति मम सन्देहः । यतः कार्यसाधने कष्टसहिष्णुता आवश्यकी । किन्तु फलम् अनुभोक्तुं विवेकः लोकज्ञानं च आवश्यकम् । एतस्य निदर्शनार्थं सुवर्णपुरस्य राजकुमार्याः कथां श्रावयामि, श्रद्धया

## वेतालकथा



शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कदाचित् पूर्वसमुद्रतीरस्थे पर्वतप्रदेशे महती वृष्टिः अभवत्, प्रचण्डः मारुतः च उत्पन्नः। मारुतः यदा शान्तः, तदा पर्वतप्रदेशे कश्चन प्राचीनः शिवालयः दृष्टः। एषः विषयः तं प्रदेशं पालयता सुवर्णपुरस्य राज्ञा शूरसेनेन ज्ञातः।

शूरसेनस्य पुत्री सुलक्षणा शिवभक्ता। सा एतं विषयं ज्ञात्वा पितरम् उक्तवती - ''तात! प्रचण्डमारुतकारणात् दृष्टिगोचरतां प्राप्तः शिवालयः अस्माकं राजधान्याः अनतिदूरे अस्ति इति तु अस्माकं सौभाग्यम्। अहं तस्य शिवालयस्य पुनरुद्धरणपूर्वकं तत्र सुन्दरं शिवालयं निर्मातुम् इच्छामि'' इति।

शूरसेनः सन्तोषेण पुत्र्याः वचनम् अङ्गीकृतवान्। कस्मिंश्चित् शुभे मुहूर्ते शिवालयस्य पुनरुद्धरणकार्यम् आरब्धम्। सुलक्षणा दिनस्य अधिकं समयं शिवालयस्य निर्माणकार्ये एव यापयति स्म।

कदाचित् मध्याह्नसमये सुलक्षणा विश्रान्तिं स्वीकुर्वती आसीत्। तदा तया कुतश्चित् सुमनोहरं वेणुगानं श्रुतम्। अनुक्षणं सा गानम् अनुसृत्य गतवती। कुत्रचित् केचन मेषाः चरन्तः आसन्। ततः अनतिदूरे वृक्षस्य अधः उपविष्टः कश्चित् युवकः नेत्रे निमील्य वेणुं वादयन् आसीत्। तस्य युवकस्य सौन्दर्यं दृष्ट्वा सुलक्षणा आश्चर्यचकिता।

वेणुवादनं समाप्य सः युवकः नेत्रे उन्मीलितवान्। पुरतः स्थितां सुलक्षणां दृष्ट्वा सः भीतः। तदा सुलक्षणा मन्दहासपूर्वकम् - ''अहं राजकुमारी सुलक्षणा अस्मि। भवतः वेणुवादनं श्रुत्वा अहम् अतीव सन्तुष्टा। भवान् कः?'' इति पृष्टवती।

''अहं वासुदेवः'' इत्युक्त्वा सुलक्षणां नमस्कृत्य ततः मेषैः सह निर्गतवान् सः युवकः।

तस्मात् दिनात् आरभ्य सुलक्षणा प्रतिदिनम् अपि रहस्येन वासुदेवेन मिलति स्म, आत्मना इष्टानि गीतानि वासुदेवद्वारा गापयति स्म च। वासुदेवः प्रतिदिनं सुलक्षणां वेणुवादनं पाठयति स्म। सुलक्षणा वासुदेवं नागरिकव्यवहारं सद्व्यवहारं च

बोधयति स्म। एकमासाभ्यन्तरे उभौ अपि आत्मीयौ जातौ।

कदाचित् सुलक्षणा वासुदेवसकाशात् वेणुवादनम् अभ्यस्यन्ती आसीत्। तदा अकस्मात् तस्याः हिक्का आरब्धा। एतत् दृष्ट्वा वासुदेवः सुलक्षणाम् उद्दिश्य - "इतः समीपे एव काचित् वृद्धा निवसति। तां वृद्धाम् अहं बाल्यतः अपि जानामि। तस्याः कुटीरसमीपस्थस्य तटाकस्य जलम् अतीव रुचिकरम् अस्ति। जलपानेन हिक्का अपगता भविष्यति। आगच्छतु" इति वदन् तां मार्गपार्श्वस्थं कुटीरं नीतवान्।

कुटीरं परितः हरितवर्णीयाः वृक्षाः पुष्पयुक्तानि सस्यानि च आसन्। तं परिसरं दृष्ट्वा सुलक्षणा आश्चर्यचकिता अभवत्। तावता वृद्धा कुटीरात् बहिः आगतवती। सुलक्षणां दृष्ट्वा - "वत्से! आगच्छतु अन्तः। सङ्कोचः मास्तु। वासुदेवाय अनुरूपा रूपवती अद्य मया दृष्टा" इति हसन्ती उक्तवती सा।

वृद्धायाः वचनं श्रुत्वा सुलक्षणा लज्जिता अभवत्। वासुदेवः कुटीरस्य अन्तः गत्वा पानजलम् आनीय सुलक्षणायै दत्तवान्। सुलक्षणा जलं पीत्वा वृद्धाम् उक्तवती - "भवत्याः कुटीरपरिसरे महान् सुगन्धः अस्ति। एतत् वातावरणं मह्यम् अतीव रोचते" इति।

'एषः सुगन्धः पारिजातपुष्पाणाम्' इति वदन्ती वृद्धा अधः विकीर्णानि पुष्पाणि सङ्गृह्य मालां कृत्वा सुलक्षणायाः शिरसि धारितवती।



किञ्चित्कालानन्तरं वासुदेवः सुलक्षणां ततः नीत्वा तां यथास्थानं प्रापय्य ततः निर्गतवान्। तस्मिन् दिने एव सुलक्षणा मनसा निर्णीतवती - 'वासुदेवः एव परिणेतव्यः' इति।

तस्यां रात्रौ राजकुमार्याः सुलक्षणायाः अन्तःपुरम् आगतः पिता शूरसेनः उक्तवान् - "वत्से! उदयपुरस्य युवराजः मणिदत्तः भवतीं परिणेतुम् इच्छति। सः सर्वप्रकारेण अपि भवत्याः अनुरूपः उत न इति परीक्षणीयः खलु! अतः अहं तस्मै वार्तां प्रेषितवान् अस्मि यत् - अत्र आगत्य दिनद्वयं स्थित्वा अस्माकम् आतिथ्यं स्वीकृत्य गच्छतु इति। अतः सः श्वः सायङ्काले अत्र आगमिष्यति" इति।



तस्मिन् समये वासुदेवस्य विषये प्रस्तावं कर्तुं धैर्यं न आसीत् सुलक्षणायाः। अतः सा मौनम् आश्रितवती।

अनन्तरदिने मध्याह्ने सुलक्षणा वासुदेवेन मिलित्वा प्रवृत्तं सर्वं निवेद्य उक्तवती - ''युवराजः मणिदत्तः माम् इच्छेत्। तस्मात् पिता अपि अङ्गीकृत्य तस्मै वचनं ददाति चेत् अनन्तरं किमपि कर्तुं न शक्यते खलु!'' इति।

एतत् श्रुत्वा वासुदेवः - ''एतद्विषये वृद्धायाः अभिप्रायं पृच्छाव। आगच्छतु'' इति वदन् तां वृद्धायाः समीपं नीतवान्।

सुलक्षणा प्रवृत्तं सर्वं वृद्धा निवेद्य - ''मम पिता मम इच्छां कदापि न तिरस्करोति। वासुदेवः सर्वप्रकारेण अपि मम पित्रे इष्टाय भवति इत्यपि मम विश्वासः अस्ति। किन्तु वासुदेवं मम पितुः समीपं नेतुं मम धैर्यं न पर्याप्तम्'' इति उक्तवती।

सुलक्षणायाः समस्यां श्रुत्वा वृद्धा क्षणकालं विचिन्त्य उक्तवती - ''एतद्विषये भीतिः मास्तु भवत्याः। वृथा चिन्तां मा करोतु। वासुदेवः वासुदेवरूपेण गन्तुं न शक्नोति चेत् युवराजस्य मणिदत्तस्य वेषं धृत्वा भवत्याः पितरं द्रक्ष्यति। वासुदेवः भवत्याः पितुः इष्टाय भवति इति भवत्याः विश्वासः अस्ति खलु! एवं तर्हि सर्वं सुखान्तम् एव भविष्यति'' इति।

उदयपुरस्य युवराजेन मणिदत्तेन यदि सुवर्णपुरं प्राप्तव्यं, तर्हि तेन पर्वतमार्गेण एव गन्तव्यम्। युवराजः यदा कुटीरसमीपम् आगमिष्यति, तदा वासुदेवेन किं करणीयम् इति तं बोधितवती वृद्धा।

तस्मिन् दिने सायङ्कालसमये राजोचितं वेषं धृत्वा युवराजः मणिदत्तः अश्वारूढः सन् तेन पर्वतमार्गेण आगतवान्।

तदा वृद्धा मणिदत्तस्य अभिमुखं गत्वा दुःखेन तं प्रार्थितवती - ''वत्स! नागराज! मम वचनं शृणोतु। कृपया भोजनं कृत्वा गच्छतु भवान्'' इति।

वृद्धायाः एतत् वचनं श्रुत्वा मणिदत्तः अतीव आश्चर्यचकितः। सः अश्वात् अवतीर्य वृद्धाम् उक्तवान् - ''अम्ब! अहं नागराजः न, अपि तु उदयपुरस्य युवराजः मणिदत्तः'' इति।

तदा तत्रैव पार्श्वे स्थितः वासुदेवः

मणिदत्तं किञ्चित् दूरं नीत्वा तम् उक्तवान् - ''श्रीमन् ! एतस्याः वृद्धायाः नागराज-नामकः पौत्रः आसीत् । सः राज्ञां सैनिकः आसीत् । बहुभ्यः वर्षेभ्यः पूर्वं कदाचित् अन्यदेशीयः कश्चित् राजा एतस्य राज्यस्य उपरि आक्रमणं कृतवान् । राजाज्ञायाः प्रकटनसमये नागराजः भोजनं कुर्वन् आसीत् । किन्तु सः राजाज्ञां श्रुत्वा भोजनम् अपि परित्यज्य अनुक्षणं खड्गं गृहीत्वा युद्धार्थं धावितवान् एव । 'भोजनं कृत्वा गच्छतु' इति प्रार्थयन्त्याः एतस्याः वचनं न लक्षितवान् एव सः नागराजः । तदा प्रवृत्ते युद्धे नागराजः दिवङ्गतः । पौत्रस्य मरणवार्तां श्रुतवत्याः एतस्याः वृद्धायाः मतिभ्रमणम् अभवत् । प्रायशः भवति एषा वृद्धा पौत्रस्य नागराजस्य साम्यं दृष्टवती । अतः कृपया भवान् एतया दीयमानं भोजनं कृत्वा गच्छतु । तेन सा निश्चयेन तृप्ता भविष्यति'' इति ।

मणिदत्तः वासुदेवस्य वचनम् अङ्गीकृतवान् । एतस्मात् अतीव सन्तुष्टा वृद्धा मणिदत्ताय भोजनं परिवेषितवती । इच्छा नास्ति चेदपि मणिदत्तः तृप्तिम् अभिनयन् भोजनं समापितवान्, अङ्गणस्थे मञ्चे उपविष्टवान् च । तदा वृद्धा चषकपरिमितं उष्णक्षीरम् आनीय मणिदत्ताय दत्तवती । मणिदत्तः क्षीरं पीतवान्, क्षणाभ्यन्तरे एव गाढनिद्रां प्राप्तवान् च ।

अनन्तरं वृद्धा वासुदेवम् उक्तवती - ''अहं युवराजाय दत्ते क्षीरे मूलिकारसं योजितवती अस्मि । अतः श्वः सायङ्कालात्पूर्वं सः जागरणं न प्राप्स्यति । भवान् एतस्य वेषं धृत्वा अश्वारूढः सन् राजभवनं गच्छतु''





इति।

वृद्धायाः वचनानुसारं वासुदेवः मणिदत्तस्य वेषं धृत्वा राजभवनं गतवान्। वासुदेवस्य सद्गुणाः रूपं च शूरसेनाय इष्टाय अभवन्। एतस्मात् अतीव सन्तुष्टः राजा शूरसेनः पुत्रीम् उद्दिश्य - ''वत्से ! भवती सौभाग्यवती । भवत्याः भावी पतिः सौन्दर्येण मन्मथसदृशः'' इति वदन् प्रीत्या पुत्र्याः शिरः आमृष्टवान्।

एतस्मात् सुलक्षणा अतीव सन्तुष्टा । अनन्तरदिने सायङ्काले राजा शूरसेनः सुलक्षणा-वासुदेवयोः नौकाविहारार्थं व्यवस्थां कृतवान्।

नौकाविहारार्थं प्रस्थानात्पूर्वं परिचारिका काचित् सुलक्षणायाः अन्तःपुरम् आगत्य ताम् उक्तवती - ''राजकुमारि ! काचित् वृद्धा भवत्याः निमित्तं पारिजातपुष्पमालाम् आनीतवती अस्ति। सा स्वयम् एव भवती दृष्ट्वा पुष्पमालां भवत्यै दातुम् इच्छति'' इति।

पुष्पमालायाः श्रवणमात्रेण एव तत्र आगता वृद्धा एव इति ज्ञात्वा सुलक्षणा परिचारिकाम् उक्तवती - ''तां वृद्धाम् अन्तः प्रेषयतु'' इति।

वृद्धा अन्तः आगत्य आतङ्कमिश्रितेन स्वरेण सुलक्षणाम् उक्तवती - ''राजकुमारि ! युवराजः मणिदत्तः महता ज्वरेण पीड्यमानः अस्ति। अहं यथाशक्ति औषधोपचारं कृतवती । तथापि सः प्रज्ञारहितः एव अस्ति। आस्थानवैद्येन सह भवती इदानीम् एव तत्र आगच्छतु'' इति।

सुलक्षणा वृद्धां सम्प्रेष्य उद्याने विहरतः वासुदेवस्य समीपं गत्वा प्रवृत्तं सर्वं निवेद्य तम् उक्तवती - ''अहम् इदानीं नौकाविहारार्थं न आगच्छामि। वैद्येन सह वृद्धायाः कुटीरं गच्छन्ती अस्मि'' इति।

एतत् श्रुत्वा वासुदेवः निराशया उक्तवान् - ''युवराजस्य अनारोग्यविषये भवती एतावन्तम् आतङ्कम् अनुभवति इति यत् तत् मयि अत्यन्तम् आश्चर्यं जनयति। किन्तु नौकाविहारार्थं भवत्याः अनागमनं तु उचितम् इति न भाति मम'' इति।

तदा सुलक्षणा किमपि न उक्तवती, अपि तु मौनं ततः निर्गत्य राजवैद्येन सह वृद्धायाः



कुटीरं गतवती।

वैद्यः मणिदत्तस्य ललाटे किमपि औषधं लेपितवान्। अनन्तरं सुलक्षणाम् उद्दिश्य - ''घण्टाद्वयाभ्यन्तरे मणिदत्तः ज्वरात् मुक्तः भविष्यति। अनन्तरम् एतत् गुलिकाद्वयं मणिदत्तं खादयतु'' इति वदन् गुलिकाद्वयं सुलक्षणायै दत्तवान्।

वृद्धायाः कुटीरे प्रवृत्तं सर्वं दृष्ट्वा राजवैद्यस्य मनसि कोऽपि सन्देहः उत्पन्नः। सः राजभवनं गत्वा प्रवृत्तं सर्वं महाराजं शूरसेनं निवेदितवान्।

अनुक्षणं शूरसेनः सपरिवारं राजवैद्येन सह वृद्धायाः कुटीरं गतवान्। तावता मणिदत्तस्य ज्वरः किञ्चिदिव न्यूनः जातः आसीत्। सः अस्पष्टं किमपि सम्भाषणं करोति स्म। सुलक्षणा दुःखेन अश्रूणि स्रावयन्ती युवराजस्य अस्पष्टकथनं श्रद्धया शृणोति स्म।

शूरसेनः तत्रत्यं वातावरणं दृष्ट्वा प्रश्नार्थकदृष्ट्या सुलक्षणां दृष्टवान्। तदा सुलक्षणा पितुः हस्तं गृहीत्वा तम् एकान्तस्थलं नीत्वा प्रवृत्तं सर्वं पितरं निवेद्य उक्तवती - ''मम प्रोत्साहकारणतः वासुदेवः मणिदत्तस्य वेषं धृत्वा राजभवनं गतवान्। अकस्मात् अनारोग्यपीडितः युवराजः अत्र अस्ति'' इति।

वासुदेवः सर्वप्रकारेण अपि शूरसेनेन अङ्गीकृतः आसीत् इति कारणतः सः सुलक्षणाविषये न कुपितः। अपि च सः पुत्रीम् उक्तवान् - ''अविवेकेन कृतः निर्णयः सर्वदा उत्तमं फलम् एव न ददाति। भवती प्रथमं मणिदत्तं क्षमां प्रार्थयतु। वासुदेवं भवती परिणेतुम् इच्छति इति यत्, तत्र तु मम आक्षेपः नास्ति'' इति।

तदा सुलक्षणा पितरम् उक्तवती - ''तात! मां क्षाम्यतु कृपया। मम चिन्तनम् अविवेकयुतम् आसीत् इति इदानीं ज्ञातं मया। अहम् अवश्यं मणिदत्तं क्षमां प्रार्थयामि। किन्तु अहं वासुदेवं न परिणेष्यामि, अपि तु युवराजं मणिदत्तम् एव परिणेष्यामि। यः मम पतिः भविष्यति, सः अग्रिमकाले एतस्य राज्यस्य राजा भविष्यति। प्रजाक्षेमपालनं, राज्यरक्षणादिकम् एव महाराजस्य प्रधानगुणाः खलु! तादृशाः गुणाः मणिदत्ते सन्ति''

इति।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! राजकुमारी सुलक्षणा वासुदेवे अनुरागवती आसीत् ! किन्तु वासुदेवं पिता न अङ्गीकुर्यात् इति तस्याः भीतिः आसीत्। पिता शूरसेनः जामातृत्वेन वासुदेवं सन्तोषेण एव अङ्गीकृतवान् । एवं सत्यपि सुलक्षणा अन्तिमक्षणे वासुदेवं निराकृत्य युवराजं मणिदत्तम् एव परिणेतुं किमर्थम् इष्टवती ? एषः अविवेकयुतः निर्णयः खलु ! अपि च समयोचितं न खलु ! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''वासुदेवस्य स्वयं चिन्तनशक्तिः न आसीत्। अपि च सः स्वार्थपरः आसीत्। अपरिचिताम् अपि वृद्धां तोषयितुं मणिदत्तः राजभवनगमनं व्याक्षिप्य वृद्धायाः आतिथ्यं स्वीकृतवान् । मणिदत्तस्य एतस्मात् एव व्यवहारात् ज्ञायते यत् - सः दयालुः इति। प्रजारक्षके महाराजे एतादृशः दयागुणः अवश्यं भवेत्। किन्तु वासुदेवस्य मनोभावः दयारहितः। सः स्वार्थनिमित्तं काञ्चित् कथां कल्पयित्वा मणिदत्तम् उक्तवान् इत्यतः एव मणिदत्तः अस्वस्थः जातः । मणिदत्तस्य अनारोग्यं ज्ञात्वा अपि वासुदेवे करुणा न उत्पन्ना । अपि च सः तस्मिन् समये अपि सुलक्षणाम् उक्तवान् - 'नौकाविहारार्थं मया सह आगच्छतु' इति। यदि तादृशः स्वार्थी, दयारहितः च राजा भविष्यति, तर्हि प्रजाः निश्चयेन कष्टम् अनुभविष्यन्ति इति विचिन्त्य सुलक्षणा वासुदेवं परिणेतुं न इष्टवती, अपि तु मणिदत्तम् एव परिणेतुम् इष्टवती । तस्याः एषः निर्णयः एव समयोचितः विवेकयुतः च। एतद्विषये तया लेशमात्रम् अपि अविवेकिता न आचरिता'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



## अस्मद्देशीयानि दुर्गाणि - २

अस्माकं देशस्य राजधान्याम् अधिकसंख्याकानि दुर्गाणि सन्ति। तावन्ति दुर्गाणि अन्यत्र कुत्रापि न सन्ति। पाण्डवानां राजधानी इन्द्रप्रस्थम् अपि इदानीन्तनदेहल्याम् आसीत् इति ऊह्यते। किन्तु इन्द्रप्रस्थं तत्रैव आसीत् इत्यत्र प्रमाणानि न उपलब्धानि। इदानीं कुतुबमिनार् यत्र अस्ति, तस्मिन् एव प्रदेशे अनङ्गपालनामकः तोमारराजः क्रि. ७३७ तमे वर्षे रक्तदुर्गं निर्मितवान् आसीत् इति तु निर्विवादः अंशः। अनन्तरं चतुर्णां शतकानाम् अनन्तरं तस्मिन् एव प्रदेशे पृथ्वीराजः चौहान्वर्यः अपरं दुर्गमेकं निर्मितवान्। पृथ्वीराजः 'राय् पिथोरा' इत्यपि आहूयते स्म। अतः तेन निर्मितं दुर्गम् अपि 'घर राय् पिथोरा' इत्येव प्रसिद्धिं गतम् अस्ति।

# रक्तदुर्गम्

रचना - मीरा उग्रा
चित्राणि गौतमसेनः



क्रि. १३०३ तमे वर्षे अल्ला-उद्दीन्-खिल्जीवर्यः कोषक्-इ-सिरिनामकं दुर्गं निर्मितवान्। तत्रैव १९९२ तमे वर्षे एशियाक्रीडाः प्राचलन्। खिल्जिवंशजानां मरणानन्तरं तुघलक्वंशजाः अधिकारस्थानम् आरूढवन्तः। मङ्गोलियानाम् आक्रमणात् स्वराज्यस्य रक्षणं कर्तुम् इच्छन्तः घियासुद्दीन्-महम्मद्-फिरोज्षानामकाः त्रयः तुघलक्राजाः तुघलकाबाद्-अदिलाबाद्-फिरोज्षाकोट्ला-नामकानि त्रीणि दुर्गाणि निर्मितवन्तः। अद्यापि तत्र उन्नताः भित्तयः, रक्षागोपुराणि च स्मारकरूपेण सन्ति।

तुघलकाबाद

इदानी 'पुराणकिला'नाम्ना व्यवह्रियमाणस्य दुर्गस्य निर्माणं द्वितीय-मोगलचक्रवर्ती हुमायूनवर्यः आरब्धवान्। शेरखानूरवर्यः तस्य दुर्गस्य निर्माणकार्यं समापितवान्। अकबरः स्वराजधानीम् आग्रां प्रति परिवर्तितवान्। सः 'बादलघड'नामकं दुर्गम् आक्रम्य, तत्र दुर्गं स्वायत्तीकृतवान्। बादलघड्दुर्गं रक्तवर्णीयाभिः इष्टिकाभिः निर्मितम् इत्यतः तत् 'लालकिला' (रक्तवर्णीयं दुर्गम्) इति नाम्ना प्रख्यातम् अभवत्। अत्यन्तं दृढस्य एतस्य दुर्गस्य अर्गलद्वयं प्राकारद्वयं च अस्ति।



पुराणकिला

लालकिला, आग्रा

निर्माणावस्थायां लालकिला, अकबरनामास्थं चित्रम्

अकबरस्य पौत्रस्य षहजहान्वर्यस्य आस्थानस्थ अमरसिङ्ग राथोड्नामकः रजपूतसेनानायकः एतस्मात् दुर्गात् पलायनं कृतवान् इत्यत्र प्रमाणभूताः अंशाः उपलभ्यन्ते। स्वस्मिन् तदा तदा आरोपं कुर्वन्तं सलावत्खान्नामकं कोशाधिकारिणम् अमरसिङ्गराथोड्वर्यः कदाचित् कोपवशात् मारितवान्। तदा षहजहानस्य सैनिकाः राथोड्वर्यं ग्रहीतुम् उद्युक्ताः। तदा सः ततः धावन् पलायितः। सैनिकाः अपि तम् अनुसृत्य धावितवन्तः। तावता दुर्गस्य प्रमुखद्वारं पिहितम् अभवत्। तदा राथोड्वर्यः अश्वस्य उपरि उपविश्य एव सोपानानि आरुह्य दुर्गस्य गोपुरम् आरूढवान्। ३० द्वादशाङ्गुलोन्नतात् गोपुरात् अधः उत्प्लुत्य ततः पलायितवान्। तस्मात् एव तावत्पर्यन्तम् अपि 'अकबरदरवाजा' इति प्रसिद्धं द्वारं, तस्मात् दिनात् आरभ्य 'अमरसिङ्गदरवाजा' इति ख्यातम् अभवत्।

षहजहानः स्वराजधानी पुनरपि देहली प्रति परिवर्तितवान्। सः षहजहानबादनगरे १६३९ तमवर्षस्य मे-मासस्य १२ दिनाङ्के कस्यचित् दुर्गस्य निर्माणम् आरब्धवान्। आग्रादुर्गम् इव एतत् दुर्गम् अपि रक्तवर्णीयाभिः इष्टिकाभिः निर्मितम् इत्यतः एतत् 'लालकिला' इति नाम प्राप्नोत्।



↑ *अमरसिङ्गदरवाजा*

*दिवान्-इ-आम् (सभामण्डपः) लालकिला, देहली* ↓



१६४८ तमवर्षस्य एप्रिल्मासस्य १८ दिनाङ्के चक्रवर्ती षहजहान्वर्यः अस्मिन् दुर्गे प्रथमवारम् अत्यन्तं वैभवेन राजसभां निरूढवान् ।

मयूरसिंहासनं मृदुकौशेयवस्त्रेण सुवर्णरजतादिभिः च अलङ्कृतं सत् द्रष्टृणां मनः रञ्जयति । यदि अस्यां भूमौ स्वर्गः इति कश्चित् स्यात् तर्हि सः एषः एव इति फिरदौसिवर्येण यत् उक्तं तत् वचनं षहजहानस्य पुत्रः दाराषुकोवर्यः मयूरसिंहासने सुवर्णाक्षरैः लेखितवान् अस्ति । औरङ्गजेबस्य अनन्तरकाले आगतानां मोगल्चक्रवर्तिनाम् एषः स्वर्गः एव नरकरूपेण परिणतम् अभवत् । मोगल्साम्राज्यस्य नाशः जातः. दुर्गम् आक्रमणकाराणां नादिरषा-अहमदषा-अब्दाली इत्यादीनां वशम् अभवत् अपि ।



बहादुरशाह जाफर

१८५७-५८ मध्यकाले ईस्ट्-इण्डिया संस्थां विरुध्य सैनिकानां विप्लवः आरब्धः । ते वृद्धं बहादूरशाह्जफार्वर्यं स्वनायकत्वेन प्रकटितवन्तः । घोरं युद्धं प्रवृत्तम् । विप्लवः आंग्लैः महता प्रयत्नेन निगृहीतः । तस्मिन् एव दुर्गे ब्रिटिष्जनाः बहादुरशाहवर्यस्य विचारणां कृत्वा सः अपराधी इति निर्णीतवन्तः, राज्यात् बहिष्कृत्य तं बर्मादेशं प्रेषितवन्तः च ।



१९४७ तमवर्षस्य अगस्त्मासस्य १५ दिनाङ्के यदा अस्माकं देशः स्वतन्त्रः जातः, तदा पण्डितः जवहरलाल्नेहरुवर्यः ब्रिटिष्ध्वजं 'यूनियनजाक्' अवतार्य त्रिवर्णयुक्तं राष्ट्रध्वजं रक्तदुर्गस्य उपरि स्थापितवान् । एवम् इतिहासस्य कथन अध्यायः (षष्ठः) समाप्तः ।

रक्तदुर्गम्, देहली



# ज्ञानस्य सदुपयोगः

पूर्वम् आनन्दनामकः युवकः कश्चित् आसीत् । सः विद्यावान् आसीत् । किन्तु सः उद्योगी न आसीत् । कमपि उद्योगं कुर्वन् धनं सम्पादयतु इति वदन्तौ तस्य मातापितरौ सदा कलहं कुरुतः स्म । आनन्दः न सम्पादयति इति कारणतः तस्य सहोदराः सहोदरपत्न्यः च आनन्दम् उपहसन्ति स्म । प्रतिवेशिनी राधा केवलम् आनन्देन सह प्रीत्या सम्भाषणं करोति स्म ।

राधायाः पिता धनिकः । राधा पितुः एकमात्रपुत्री आसीत् । 'अहं यदि राधां परिणेष्यामि तर्हि धनिकः भवितुं शक्नोमि' इति विचिन्त्य कदाचित् आनन्दः विवाहविषये राधां पृष्टवान् ।

तदा राधा मन्दहासपूर्वकम् उक्तवती - ''मम पितुः धनविषये यस्य आशा नास्ति, यश्च स्वयं धनं सम्पादयति, तादृशम् एव परिणेष्यामि अहम्'' इति ।

राधायाः एतत् वचनं श्रुत्वा आनन्दे विरक्तिः उत्पन्ना । अतः सः आत्महत्यां कर्तुम् इच्छन् समीपस्थम् अरण्यं गतवान् । उद्बन्धनपूर्वकम् आत्महत्या करणीया इति निश्चित्य सः वृक्षे रज्जुं बद्धवान् । अनन्तरं च नेत्रे निमील्य देवध्यानं कृतवान् ।

तावता अरण्यमार्गेण गच्छन् कश्चित् महानुभावः आत्महत्यां कर्तुम् उद्युक्तम् आनन्दं सान्त्वयन् तदीयां समस्यां ज्ञातवान् । अनन्तरं सः महानुभावः मन्दहासपूर्वकम् आनन्दम् उद्दिश्य - ''अस्मिन् अरण्ये बहवः साधुमृगाः क्रूरमृगाश्च सन्ति । साधुमृगानां क्रूरमृगेभ्यः भयम्, क्रूरमृगाणां च व्याधेभ्यः भयम् । सर्वेषां मृगाणाम् अपि प्रकृति-प्रकोपात् भयम् । तथापि ते उत्साहेन जीवन्ति । मानवः तु स्वचिन्तनशक्त्या यत्किमपि साधयितुं समर्थः अस्ति । एवं सति भवान् अल्पे एव वयसि आत्महत्यां



कर्तुम् उद्युक्तः अस्ति इति यत् तत् नितराम् अपमानकरं खलु !'' इति उक्तवान्।

एतत् श्रुत्वा आनन्दः स्वव्यवहारविषये लज्जाम् अनुभवन् तं महानुभावम् उक्तवान् - ''ज्ञानी भवान् मम न्यूनतां सम्यक् ज्ञापितवान् अस्ति। किन्तु धनसम्पादनमार्गं न जानामि खलु अहम्'' इति।

तदा महानुभावः उक्तवान् - ''धनसम्पादनार्थं बहवः मार्गाः सन्ति। यः अन्यम् अवलम्ब्य जीवति, तस्य समाजे गौरवं न भवति। भवान् दारिद्र्यजीवनं यापयति चेदपि यदि स्वतन्त्रतया जीवति, तर्हि सर्वे भवन्तं गौरवेण पश्यन्ति। मानवानां परोपकारबुद्धिः कियती अस्ति, तत्र कियत् प्रयोजनकरम् इति ज्ञातव्यं चेत् किञ्चित्कालं यावत् अरण्ये वासः करणीयः। तदा एव भवति जनविषयकं गौरवम् उत्पद्यते। नो चेत् भवान् मया सह नगरम् आगच्छतु। तत्र अहं कमपि उद्योगं दापयितुं प्रयत्नं करोमि'' इति।

आनन्दः अरण्ये स्थातुं न इष्टवान्। अतः सः महानुभावेन सह एव प्रस्थितः। तौ अरण्यम् अतिक्रम्य कञ्चित् ग्रामं प्राप्य, तत्र कस्याञ्चित् धर्मशालायां स्थितवन्तौ।

कदाचित् रात्रिसमये महानुभावस्य समीपे विद्यमानं धनं चोरयित्वा पलायमानं चोरं गृहीतवान् आनन्दः। तावता धर्मशालायां बहवः जनाः सम्मिलितन्तः। ते सर्वे उक्तवन्तः - 'एषः चोरः सम्यक् ताडनीयः' इति। तदा महानुभावः तान् जनान् सान्त्वयन् उक्तवान् - ''एषः किमर्थं चौर्यं कृतवान् इति प्रथमं विचारयाम'' इति।

तदा चोरः स्वकष्टं तान् निवेदितवान्। तत् श्रुत्वा तत्रत्यानां हृदयं द्रुतम्। केचन तु तस्य कथां श्रुत्वा दुःखेन अश्रूणि स्रावितवन्तः अपि। एतत् दृष्ट्वा महानुभावः मन्दहासपूर्वकम् उक्तवान् - ''दुःखेन बुभुक्षानिवारणं कर्तुं न शक्यते। एतस्य चोरस्य सहानुभूतिः न आवश्यकी, अपि तु धनम् आवश्यकम्। अस्मासु यदि कश्चित् चौर्यार्थं प्रयत्नं करोति, तर्हि तस्य कारणीभूताः वयम् एव'' इति।

तत्र सम्मिलिताः सर्वे महानुभावस्य वचनम् अङ्गीकुर्वन्तः यथाशक्ति चोराय धनं दत्तवन्तः। तस्मात् शतं रूप्यकाणि

सङ्गृहीतानि अभवन्।

तदा महानुभावः उक्तवान् - "भवतः ग्रामः कः इति वदतु भवान्। अहं भवतः ग्रामं गत्वा एतेन धनेन भवदीयानाम् आवश्यकताः पूरयिष्यामि" इति।

एतत् श्रुत्वा चोरः महानुभावस्य पादयोः पतित्वा तं क्षमां प्रार्थयन् उक्तवान् - "स्वामिन् ! मदीयः इति कोऽपि नास्ति मम। एकाकी अहम् अविवेकेन चौर्यवृत्तिम् आरब्धवान्। इतःपरम् अहं चौर्यं न करिष्यामि। अस्मिन् ग्रामे मह्यं कोऽपि उद्योगं न दद्यात्। अतः अहम् एतानि शतं रूप्यकाणि स्वीकृत्य अन्यत्र कुत्रापि गत्वा वाणिज्यं कुर्वन् न्याय्येन जीवनं यापयिष्यामि" इति।

तदा महानुभावः मन्दहासपूर्वकं चोरम् उद्दिश्य - "अस्मिन् ग्रामे उद्योगः न लभ्यते चेदपि कापि चिन्ता नास्ति खलु भवतः ? भवान् अविद्यमानम् अपि कष्टं कल्पयित्वा अस्मान् उक्तवान्, अश्रूणि स्रावितवान् च। अतः भवान् नटः भवितुं योग्यः अस्ति। चौर्यं नीचकार्यम्। नटनं गौरवयुता वृत्तिः। अतः भवान् नाटकम् अभिनयन् धनसम्पादनं करोतु" इति वदन् चोरतः शतं रूप्यकाणि स्वीकृत्य तत्रैव पार्श्वे स्थिताय कस्मैचित् धनिकाय दत्तवान्।

अनन्यगतिकः चोरः महानुभावस्य वचनम् अङ्गीकृतवान्। अनन्तरं महानुभावः आनन्दः च ततः प्रस्थितौ। गमनसमये मध्येमार्गं आनन्दः महानुभावस्य ज्ञानस्य प्रशंसां कृतवान्। तदा महानुभावः उक्तवान् - "केचन अनन्यगतिकाः सन्तः चौर्यवृत्तिम् आश्रयन्ति। अपरे केचन





आलस्यवशात् चौर्यवृत्तिम् अवलम्बन्ते । अस्मासु दानबुद्धिः अस्ति चेत् न पर्याप्तम् । सत्पात्रे एव दानं करणीयम् इति विवेकिता आवश्यकी'' इति ।

''भवादृशाः महाज्ञानिनः यदि सर्वत्र स्युः तर्हि प्रपञ्चे अपराधाः एव न सम्भविष्यन्ति'' इति उक्तवान् आनन्दः ।

तदा महानुभावः उक्तवान् - ''ज्ञानं सर्वेषु अपि न भवति, तथैव ज्ञानिनः अपि सर्वेषाम् उपयोगाय न भवेयुः । सर्वे अपि धनम् इच्छन्ति, न तु ज्ञानम् । धनार्थम् एव तेन चोरेण चौर्यं करणीयम् आपतितम् । भवान् अपि धनाभावकारणात् एव आत्महत्यां कर्तुम् उद्युक्तः आसीत् खलु ! भवतु । भवन्तं नगरस्थस्य मम स्वामिनः समीपं नेष्यामि अहम् । मम स्वामी धनवान्, ज्ञानवान् च । अतः एव सः मादृशान् बहून् पोषयन् अस्ति । भवतः जीवनार्थम् अपि कञ्चन मार्गं दर्शयेत् सः'' इति ।

नगरप्राप्तितः पूर्वं महानुभावस्य बहुविधाः प्रतिभाः आनन्देन ज्ञाताः । कुत्रचित् मरणावस्थायां स्थितं कञ्चित् रोगिणं परितः उपविश्य तस्य बान्धवाः देवं प्रार्थयन्तः आसन् । एतत् दृष्ट्वा महानुभावः कोपेन तान् उक्तवान् - ''एतस्य रोगिणः मुखे मरणच्छाया अपि नास्ति । प्रथमं वैद्यः आनीयताम्'' इति ।

यदा वैद्यः आगतः तदा महानुभावः रोगिणः मुखलक्षणं दृष्ट्वा स्वकीयम् आशयं वैद्यं निवेदितवान् । तदा वैद्यः महानुभावं सविनयं नमस्कृत्य उक्तवान् - ''वैद्यशास्त्रं सम्यक् अधीतवता अपि मया एतस्य रोगलक्षणं न ज्ञातम् आसीत् । इदानीं भवतः कथनानन्तरम् एव मया ज्ञातम् - 'एतस्य कः रोगः' इति । महाज्ञानी भवान् अवतारपुरुषः इति चिन्तयामि अहम्'' इति ।

अनन्तरं वैद्यः रोगिणे औषधं दत्तवान् । सः रोगी प्राणापायात् रक्षितः अभवत् ।

रोगिणः बान्धवाः महानुभावाय कृतज्ञतापूर्वकं धनं दातुम् उद्युक्ताः । तदा महानुभावः मन्दहासपूर्वकं - ''मया विशेषसाहाय्यं किमपि न कृतम् । भगवता अनुगृहीतं वायुः जलं च जनानां यथा उपयोगाय भवति, तथैव मदीयं ज्ञानम् अपि सर्वेषाम् प्रयोजनाय भवतु इत्येव मम

आशयः'' इत्युक्त्वा ततः गतवान्।

ततः आनन्दः महानुभावश्च उभौ अपि नगरं गतवन्तौ। महानुभावः स्वगृहे एव आनन्दस्य वसतिव्यवस्थां कल्पितवान्। अनन्तरदिने सः आनन्दं स्वस्वामिसमीपं नीतवान्। तस्य स्वामी कौशेयवस्त्राणि धृतवान् आसीत्। कण्ठे रत्नहारं च धृतवान् आसीत्। सुगन्धतैलं स्वशरीरे लेपितवान् आसीत्।

आगतं महानुभावं दृष्ट्वा तस्य स्वामी कोपेन उक्तवान् - ''दिनद्वयात् पूर्वम् एव वस्तुतः भवता आगन्तव्यम् आसीत्। भवतः अनुपस्थितिकारणतः लक्षाधिकरूप्यकाणाम् हानिः जाता मम। विदेशीयः कश्चित् कश्चित् वज्रहारं विक्रेतुम् इष्टवान्। किन्तु तानि वज्राणि कृतकानि वा न वा इति मया न ज्ञायते। भवादृशः अन्यः कोऽपि निपुणः अपि न आसीत् तस्मिन् समये। तं वज्रहारं मम प्रतिस्पर्धी कश्चित् क्रीतवान् अस्ति। भवान् उक्ते समये आगच्छति इति विश्वस्य भवतः गमनार्थम् अनुमतिं दत्तवान् आसम् अहम्। वचनपालनं करणीयम् इत्यपि ज्ञानं नास्ति खलु भवतः!'' इति।

'अनिवार्यकारणैः विलम्बः जातः। पुनः एतादृशः दोषः यथा न भवेत् तथा प्रयत्नं करोमि। कृपया क्षमां करोतु' इति पुनः पुनः प्रार्थितवान् महानुभावः। तदा तस्य स्वामी समाहितः अभवत्।

तस्मिन् समये केचन कर्मकराः कञ्चित् आनीय स्वामिनम् उक्तवन्तः - ''स्वामिन्! एषः विश्वासार्हः इव व्यवहरन् उपायेन चौर्यार्थम् उद्युक्तः आसीत्'' इति।





एतत् श्रुत्वा स्वामी उक्तवान् - "एतस्मै रूक्षं वस्त्रं धारयित्वा चोरः इति फलकं लिखित्वा एतस्य कण्ठे स्थाप्यताम् । सायङ्काले गर्दभस्य उपरि एतम् उपवेश्य वीथ्यां नयन्तु । षट्सप्ताहं यावत् एवम् एव क्रियते चेत् एषः पुनः कदापि चौर्यं न करिष्यति" इति ।

स्वामिनः एतं निर्णयं शृण्वन् अपि महानुभावः मौनं स्थितवान् आसीत् । एतत् दृष्ट्वा आनन्दः अतीव आश्चर्यचकितः ।

अनन्तरं कश्चित् कर्मकरः स्वामिनः समीपम् आगत्य तं प्रार्थितवान् - 'मम पुत्रः अस्वस्थः अस्ति । अतः कृपया किञ्चित् धनं ददातु' इति ।

तदा स्वामी उक्तवान् - "अस्मिन् नगरे वेङ्कटेश्वरदेवालयः मया किमर्थं निर्मितः अस्ति इति न जानाति वा भवान् ? कष्टकाले भवादृशाः तत्र गत्वा देवं प्रार्थयेयुः इति कारणतः एव । ये धनिकाः सन्ति तेषां साहाय्यं न करोति देवः । अतः एव तादृशानां वैद्यः आवश्यकः । दरिद्राणां तु देवः एव वैद्यः । अतः भवान् देवालयं गत्वा देवं प्रार्थयतु" इति ।

एतत् श्रुत्वा अपि महानुभावः मौनम् एव आश्रितवान् ।

महानुभावः आनन्दं दर्शयन् स्वामिनम् उक्तवान् - "भवतः कार्यालये एतस्य योग्यः कश्चित् उद्योगः अवश्यं दापनीयः" इति ।

"भवता सूचितं चेत् अवश्यम् उद्योगं दापयामि एव" इति उक्त्वा स्वामी आनन्दं कांश्चन प्रश्नान् पृष्टवान् । आनन्दः सुयोग्यम् उत्तरितवान् । एतस्मात् सन्तुष्टः स्वामी आनन्दम् उक्तवान् - "भवते सहस्रं रूप्यकाणि वेतनं दास्यामि । भवता मम कार्यालये गणनाकार्यं करणीयम्" इति ।

अनन्तरम् आनन्दः महानुभावश्च गृहं प्रस्थितौ । मार्गे आनन्दः महानुभावाय कृतज्ञतां समर्पयन् - "भवतः स्वामी भवतः ज्ञानस्य उपयोगेन एव अधिकानि कार्याणि निर्वहति खलु !" इति पृष्टवान् ।

"मम ज्ञानस्य साहाय्येन एव सः लक्षाधिकरूप्यकाणां धनसम्पादनं कुर्वन् अस्ति" इति उक्तवान् महानुभावः ।

तदा आनन्दः उक्तवान् - "सः वस्त्रविषये केवलं भवतः साहाय्यम् इष्टवान् आसीत् ।

अन्येषु सन्दर्भेषु सः भवतः अभिप्रायं न पृष्टवान्। अपि च सः बहुषु सन्दर्भेषु अनुचितं निर्णयं स्वीकृतवान् । तथापि भवान् तं न बोधितवान्, अपि तु मौनम् आश्रितवान्'' इति ।

एतत् श्रुत्वा महानुभावः उक्तवान् - ''तस्मिन् सन्दर्भे मया हितवचनं बोधितं चेदपि सः मम वचनं न अपालयिष्यत्, अपि तु कोपं प्राकटयिष्यत् । अहं तं तोषितवान् इत्यतः एव सः मम आशयानुसारं भवते उद्योगं दत्तवान्'' इति ।

''एवं तर्हि आरम्भे सः भवान् विलम्बेन आगतः इति भवन्तं बहुधा निन्दितवान् । तादृशं निन्दनं श्रुत्वा अपि तस्य समीपे एव भवान् कार्यं करोति खलु ! एतत् आत्मगौरवं नाशयति खलु ! एतेन भवतः खेदः न भवति वा ?'' इति पृष्टवान् आनन्दः ।

तदा महानुभावः मन्दहासपूर्वकम् उक्तवान् - ''अज्ञानिनः धनम् एव प्राधान्यं मन्यन्ते । अज्ञानी धनार्थं यत्किमपि कुर्यात् । यदि अहम् आत्मानं ज्ञानिनं मन्ये, तर्हि 'आत्मगौरव'पदस्य अर्थः एव न स्यात् । आत्मा स्वयम्प्रकाशः नित्यनूतनः च । अतः आत्मा कदापि मलिनः न भविष्यति । स्वामी यदा मां निन्दति, तदा तं बालत्वेन पश्यति मयि तद्विषये करुणा उदेति । सः यद्यपि मां निन्दति, किन्तु कदापि मां त्यक्तुं न इच्छति सः । यतः मत्तः तस्य महत् प्रयोजनम् अस्ति । अहम् अपि तं परित्यज्य अन्यत्र गन्तुं न शक्नोमि । यतः सः मम ज्ञानस्य सदुपयोगं करोति । तस्य कारणात् एव जीवने मम शान्तिः अस्ति । अपि च यः ज्ञानी अस्ति, यश्च उक्तं न पालयति, यस्य च आवश्यकता नास्ति, तादृशेभ्यः उपदेशकरणं निष्प्रयोजनम्'' इति ।

महानुभावस्य एतत् वचनं श्रुत्वा आनन्दस्य सन्देहाः निवारिताः अभवन् । सः महानुभावस्य हितवचनानुसारं येषाम् आवश्यकता अस्ति, तेषां केवलं स्वज्ञानस्य उपयोगं कुर्वन् कीर्तिकांक्षां विना जीवनं यापितवान् । तस्मात् सः 'सज्जनः' इति ख्यातिं प्राप्तवान् ।



# र स वा र्ताः

## वर्णैः आत्मानम् अलङ्करोति 'ओल्ड्लेडी' (गोपुरम्)

प्यारिस्नगरस्थं 'ईफिल् टवर' १०६ वर्षेभ्यः पूर्वं निर्मितम् । तत्रत्याः जनाः एतत् गोपुरं प्रीत्या 'ओल्ड्लेडी' इति कथयन्ति । इदानीम् एतस्य गोपुरस्य वर्णलेपनकार्यं प्रचलत् अस्ति । फेञ्चविप्लवात् शतस्य वर्षाणाम् अनन्तरं, तस्य स्मरणार्थं १८८७ तमे वर्षे गस्टेव् अलेग्झाण्ड्रे ईफिल्वर्यः एतत् गोपुरं निर्मितवान् । तदारभ्य अष्टसु वर्षेषु एकवारम् एतस्य गोपुरस्य वर्णलेपनं कुर्वन्तः सन्ति । एतस्य औन्नत्यं १०५० पादपरिमितम् (३२० मी) उन्नतम् एतत् गोपुरम् आरुह्य ये कार्यं कृतवन्तः तेभ्यः वेतनदानस्य परिमाणम् अधिकं कृतवान् ईफिल्वर्यः इति प्रतीतिः । इदानीं ये कार्यं कुर्वन्तः सन्ति, तेभ्यः अपि सामान्यकर्मकरेभ्यः दीयमानस्य वेतनस्य अपेक्षया अधिकं वेतनं दीयमानम् अस्ति । १५-२० मासाभ्यन्तरे वर्णलेपनकार्यं समाप्तं भवेत् । एतस्य वर्णलेपनार्थं ५० टन्परिमितस्य वर्णस्य उपयोगः क्रियते । 'सीन्'नामिकायाः नद्याः तीरस्थम् एतत् गोपुरं द्रष्टुं प्रतिवर्षं ६,०००,००० प्रेक्षकाः आगच्छन्ति । प्यारिस्नगरस्य प्रमुखम् अभिज्ञानम् एतत् गोपुरं १८८९ तमे वर्षे प्रेक्षणीयस्थलत्वेन घोषितम् ।

## प्रथमा अन्तरिक्षनौकाचालिका

अमेरिकादेशस्य डिस्कवरिनामिका अन्तरिक्षनौका फेब्रवरीमासस्य तृतीयदिनाङ्के अन्तरिक्षे उड्डयनम् अकरोत् । सप्ताहं यावत् अन्तरिक्षे एव डयनं कृत्वा भूमिं प्रत्यागतवती अस्ति सा । एलिन्कालिन्स्नामिका काचित् महिला एतां नौकां चालितवती । एषा एव प्रथमा 'स्पेस् फैलट्' । एतस्याः वयः ३८ वर्षाणि । बाल्यात् अपि एलिनवर्यायाः इच्छा आसीत् यत् अन्तरिक्षप्रयाणं करणीयम् इति । इदानीं तस्याः इच्छा पूर्णतां गता । एतया चालिता डिस्कवरिनौका अन्तरिक्षमार्गे मीर्नामिका रशियन्-व्योमप्रयोगशाला या भ्रमन्ती अस्ति, तस्याः समीपं गता आसीत् इति यत् तेन जनाः आश्चर्यचकिताः सन्ति । मासचतुष्टयाभ्यन्तरे डिस्कवरिनौका पुनरपि अन्तरिक्षं प्रति प्रेषणीया, तत्र च मीर्समीपे एव 'डिस्कवरि'नौका अपि योजनीया इति योजनां कुर्वन्तः सन्ति विज्ञानिनः ।

## 'तृष्णां' चालितवती नाविका

सेकेण्ड् लेफ्टिनेण्ट् दीपानीतादास्वर्या साहसिनी इति परिगणयितुं शक्यते। १९९४ तमे वर्षे मार्चमासे सा भारतसैन्यं प्रविष्टवती । सप्तमासानन्तरं सा मुम्बयीतः सिङ्गपुरं गत्वा प्रत्यागतायाः 'तृष्णा'नामिकायाः नाविकात्वेन गत्वा आगतवती । 'तृष्णा'नौकां चालितवत्सु नाविकेषु प्रथमा महिला दीपा एव । गतस्य फेब्रवरीमासस्य प्रथमे दिनाङ्के मुम्बयीतः प्रस्थिता तृष्णा माल्डीव्स्-श्रीलङ्का - अण्डमान्स् - थायल्याण्ड् - इण्डोनेषिया - मलेशिया - सिङ्गपुरमार्गेण ११,००० कि.मी. प्रयाणं कृत्वा यशस्वितया मुम्बयीं प्रत्यागतवती अस्ति ।





# महाभारतम्

स्वमात्रा सह वारणावतं गन्तुं पाण्डवाः सिद्धाः। तेषां गमनार्थं रथाः अपि सिद्धाः। ते भीष्मं, धृतराष्ट्रं, विदुरं, द्रोणं, कृपाचार्यं, बाह्लीकं, सोमदत्तम्, इतरान् च ज्येष्ठान् सविनयं नमस्कृत्य खिन्नवदनाः सन्तः ततः प्रस्थिताः।

तदा साहसिनः केचन पाण्डवान् अनुसरन्तः राजभीतिं विना - ''हा हन्त ! एषः अन्धः राजा धृतराष्ट्रः महान् पापी अस्ति। पाण्डवाः कस्यापि अपकारं न आचरितवन्तः। पाण्डवानां पित्रा पालितम् एव राज्यं खलु एतत् ! तथापि युधिष्ठिरः एवं राज्यम् एव त्यक्त्वा गमनं कथं वा अङ्गीकृतवान् ? एतादृशे पापकार्ययुते राज्ये अस्माभिः किमर्थं स्थातव्यम् ? वयम् अपि युधिष्ठिरम् एव अनुसराम'' इति परस्परं सम्भाषणं कुर्वन्ति स्म।

एतत् श्रुत्वा युधिष्ठिरः तान् उद्दिश्य - ''भोः ! धृतराष्ट्रः एव एतस्य राज्यस्य राजा। तस्य वचनं वयं पालयामः। तत् अस्माकं कर्तव्यम् अपि। भवन्तः अस्माकं हितचिन्तकाः खलु ! अतः भवन्तः अस्मान् आशिषा अनुगृह्य कृपया स्वस्वगृहं गच्छन्तु'' इति उक्तवान्।

एतत् श्रुत्वा अनन्यगतिकाः ते पाण्डवान् आशिषा अनुगृह्य ततः निर्गताः।

अनन्तरं विदुरः युधिष्ठिरेण सह किञ्चित् दूरं गत्वा तम् उद्दिश्य - ''वारणावते भवतां निमित्तम् एव लाक्षागृहं निर्मितम् अस्ति। शत्रुपक्षीयः कश्चित् तद्गृहस्य व्यवस्थां



पश्यति । लाक्षागृहस्य दहनपूर्वकं भवतां सर्वेषां मारणयत्नः प्रचलन् अस्ति । अतः भवद्भिः अत्यन्तं जागरूकैः भवितव्यम् । भवन्तः वञ्चिताः न भवेयुः, अपि तु शत्रुपक्षीयाणां सन्देहः यथा न भवेत्, तथा तस्मात् लाक्षागृहात् उपायेन भवद्भिः बहिः गन्तव्यम् । भवतां बहिर्गमनार्थं लाक्षागृहात् अरण्यपर्यन्तं सुरङ्गमार्गः कश्चन निर्मितः अस्ति । भवन्तः उपायेन आत्मरक्षणं कुर्वन्तु । भवन्तः सुरङ्गमार्गेण गत्वा अरण्यं प्राप्नुवन्ति चेत् अनन्तरं नक्षत्राणां द्वारा दिशः ज्ञात्वा कुत्रापि गन्तुम् अर्हन्ति । किन्तु भवद्भिः लाक्षागृहम् अवश्यं गन्तव्यम्'' इति रहस्येन उक्त्वा ततः प्रतिगतवान् ।

अनन्तरं कुन्तीदेवी युधिष्ठिरं पृष्टवती - ''वत्स ! विदुरः भवन्तं रहस्येन किमपि उक्तवान् खलु ! तत् किम् इति वयं श्रोतुं शक्नुयाम वा ?'' इति ।

तदा युधिष्ठिरः मातरम्, अनुजान् च उद्दिश्य उक्तवान् - ''अग्नेः अन्यकारणात् वा यदि भयं सञ्जायते, तर्हि उपायेन आत्मरक्षणं करणीयम् । न्यायमार्गेण जीवनं यापयन्तः राज्यं सम्पादयन्तु इति विदुरः अस्मान् बोधितवान् अस्ति'' इति ।

फाल्गुनशुक्ले अष्टम्यां पाण्डवाः वारणावतं प्राप्तवन्तः । पाण्डवानाम् आगमनं पूर्वम् एव ज्ञात्वा वन्दिमागधाः अन्ये च तान् स्वागतीकृतवन्तः । पाण्डवानाम् आगमननिमित्तं नगरं तोरणादिभिः पुष्पहारैः रङ्गवल्ल्या च सुन्दरम् अलङ्कृतम् आसीत् ।

पाण्डवाः नगरप्रवेशानन्तरं तत्रत्यानां सर्वेषां गृहाणि गत्वा सर्वेभ्यः उपायनानि दत्तवन्तः ।

पुरोचनः पाण्डवानां निमित्तम् एव सज्जीकृतं गृहं प्रति तान् नीत्वा तत्र तेषां भोजनव्यवस्थां कृतवान् । दशदिनानन्तरं कदाचित् पुरोचनः युधिष्ठिरम् उक्तवान् - ''भवतां निमित्तम् एव निर्मितस्य अस्य वैशिष्ट्यं महत् । अस्मिन् गृहे भवन्तः निरातङ्कं सुखेन वसन्तु'' इति ।

तद्गृहस्य रहस्यं, तेषां वञ्चनाजालं च ततः पूर्वम् एव ज्ञातवान् आसीत् खलु युधिष्ठिरः । तथापि सः तद्गृहस्य सौन्दर्यम् दृष्टवान् इव पुरोचनेन सह सन्तोषेण सम्भाषणं कृतवान् ।

अनन्तरं पाण्डवाः तस्मिन् लाक्षागृहे एव वासम् आरब्धवन्तः।

युधिष्ठिरः कदाचित् विदुरेण उक्तं सर्वं रहस्येन भीमम् उक्त्वा - "भीमसेन ! एतद्गृहस्य सुगन्धः महान् अस्ति खलु ! यदि एतस्य गृहस्य अग्निस्पर्शः भवति, तर्हि क्षणाभ्यन्तरे गृहं भस्मसात् भवति। एतेन गृहेण सहैव अस्मान् मारयितुं शत्रुपक्षीयैः प्रेषितः जनः एव एषः पुरोचनः। अतः अस्मिन् गृहे अस्माभिः जागरूकैः भवितव्यम्" इति उक्तवान्।

युधिष्ठिरस्य एतत् वचनं श्रुत्वा भीमसेनः उक्तवान् - "एवं तर्हि अत्र वासः एव मास्तु अस्माकम्। अन्यत्र कुत्रचित् गच्छाम" इति।



तदा युधिष्ठिरः उक्तवान् - "भवतः चिन्तनं न उचितम्। यतः वयं यदि अस्मिन् गृहे न निवसेम, तर्हि पुरोचनः प्रकारान्तरेण अस्मान् मारयितुं प्रयत्नं करिष्यति एव। अस्मिन् गृहे एव वयम् अग्निना मरणं प्राप्तवन्तः इति पुरोचने भ्रान्तिम् उपाद्य अस्माभिः उपायेन आत्मरक्षणं करणीयम्। तदर्थं च अस्माभिः अरण्यमार्गाः सम्यक् ज्ञातव्याः। अतः इतःपरं वयं प्रतिदिनं मृगयाव्याजेन अरण्यं गत्वा अरण्यमार्गान् अन्विष्याम" इति।

भीमसेनः युधिष्ठिरस्य वचनम् अङ्गीकृतवान्।

अनन्तरदिनेषु पाण्डवाः दिनसमये मृगयाव्याजेन अरण्ये अटन्ति स्म, रात्रिसमये गृहे अपि निद्रां विना उपविश्य एव कालयापनं कुर्वन्ति स्म।

अत्रान्तरे हस्तिनापुरे विदुरः सुरङ्गनिर्माणे निपुणं कञ्चित् दृष्ट्वा, तेन किं किं करणीयम् इति विस्तरेण तं निवेदितवान्। अपि च सः सुरङ्गनिर्माता पाण्डवानां पक्षीयः एव इति ज्ञानार्थं कानिचन अभिज्ञानानि उक्त्वा, तं वारणावतस्थानां पाण्डवानां समीपं प्रेषितवान्।

सुरङ्गनिर्माता वारणावतं गत्वा पाण्डवान् उक्तवान् - "दुष्टानां सूचनानुसारम् एषः दुर्विनीतः पुरोचनः आगामिन्यां कृष्णचतुर्दश्यां रात्रौ भवतां वासस्थानस्य एतस्य लाक्षागृहस्य अग्निस्पर्शं करिष्यति।

तस्यां रात्रौ भवद्भिः इतः उपायेन बहिः गन्तव्यम् । तदर्थं च एतस्य गृहस्य मध्यभागात् अरण्यप्रदेशपर्यन्तं सुरङ्गमार्गः मया निर्मातव्यः, तेन च सुरङ्गमार्गेण भवद्भिः गत्वा कुत्रचित् गन्तव्यम् इति विदुरः मां सूचितवान् अस्ति । विदुरस्य वचनानुसारम् अहं सुरङ्गमार्गनिर्माणार्थं हस्तिनापुरतः आगतवान् अस्मि'' इति।

अनन्तरं सुरङ्गनिर्माता गृहस्य मध्यभागे बिलमेकं निर्माय तत् बिलम् आवरणेन पिहितवान्, एतां व्यवस्थां पाण्डवेभ्यः दर्शितवान् च।

पाण्डवाः स्ववासस्थानस्य लाक्षागृहस्य दहनविषये वा, तदर्थं च नियुक्तस्य पुरोचनस्य विषये वा किञ्चिदपि सन्देहं न प्रकटयन्ति स्म, अपि तु पुरोचने अत्यन्तम् आत्मीयतां प्रदर्शयन्ति स्म।

कृष्णचतुर्दशी आसन्ना। कुन्तीदेवी तस्मिन् दिने नगरस्थेभ्यः सर्वेभ्यः अन्नदानं कृतवती । पुरोचनः काञ्चित् कर्मकरीं तस्याः पुत्रान् च पाण्डवानां परिचारकत्वेन नियोजितवान् आसीत् । ते कुन्तीदेव्याः सर्वकार्येषु अपि साहाय्यं कुर्वन्ति स्म । कृष्णचतुर्दश्याम् उत्सवनिमित्तं ते परिचारकाः यथेच्छं सुरां पीत्वा तस्यां रात्रौ लाक्षागृहे एव शयनं कृतवन्तः।

मध्यरात्रसमये भीमसेनः पुरोचनेन यस्मिन् प्रकोष्ठे शयितम् आसीत्, तस्य प्रकोष्ठस्य द्वारस्य अग्निस्पर्शं कृत्वा कुन्तीदेवीं युधिष्ठिरम् अनुजान् च सुरङ्गद्वारा प्रेषितवान्। अनन्तरं च गृहस्य चतुर्षु कोणेषु अपि अग्निस्पर्शं कृत्वा बिलं प्रविश्य



सुरङ्गमार्गेण गतवान् । स्वक्षेमविषयं सुरङ्गनिर्मातारं निवेद्य ततः पाण्डवाः सर्वे सुरङ्गमार्गेण एव गत्वा अरण्यं प्राप्तवन्तः।

अरण्ये गमनसमये कुन्ती श्रान्त्या चलितुं न शक्ता। तदा भीमः मातरं कुन्तीं स्वस्कन्धे उपवेशितवान्। चलितुं कष्टम् अनुभवतः अन्यान् अपि भीमः हस्तग्रहणपूर्वकम् अग्रे नीतवान्। एवंप्रकारेण पाण्डवाः अन्धकारे एव अरण्यमार्गेण गच्छन्तः गङ्गानदीं प्राप्तवन्तः।

गङ्गानद्याः तीरे पाण्डवानां निमित्तम् एव काचित् नौका स्थिता आसीत्। एतां नौकां विदुरः एव व्यवस्थापितवान् आसीत्।

नाविकस्य वचनात् सः विदुरेण प्रेषितः एव इति ज्ञात्वा पाण्डवाः मात्रा सह नौकाम् आरुह्य गङ्गानदीं तीर्णवन्तः। पाण्डवैः विदुरं सूचयितुम् अभिनयपूर्वकं नाविकं प्रति किमपि उक्तम्। तत् वचनं विदुरं सूचयितुम् इच्छन् नाविकः ततः हस्तिनापुरं प्रति नौकां चालितवान्।

पाण्डवाः नक्षत्राणां चलनं दृष्ट्वा दिशं ज्ञात्वा दक्षिणदिशि गतवन्तः। किञ्चिद्दूरं यदा गतं, तदा भीमं विहाय अन्ये सर्वे अतीव श्रान्ताः। ते एकं पदम् अपि अग्रे चलितुम् अशक्ताः सन्तः तत्रैव उपविष्टवन्तः। आरात्रि निद्रां विना अन्धकारयुते अरण्यमार्गे चलनेन नितरां श्रान्तान् तान् भीमः स्वस्कन्धे उपवेश्य अग्रे गतवान्। किञ्चिद्दूरं गत्वा कस्याश्चित् शिलायाः उपरि तान् सर्वान् उपवेशितवान्। भीमः अपि तत्रैव पार्श्वे उपविष्टवान्। तदा कुन्ती भीमम् उक्तवती – "वत्स! मम महती पिपासा। अहं जलं पातुम्



इच्छामि'' इति।

भीमः पुनरपि सर्वान् उन्नीय कस्यचित् वटवृक्षस्य समीपं नीत्वा, तान् तत्र उपवेश्य - ''भवन्तः अत्रैव तिष्ठन्तु। अहं जलम् आनेष्यामि'' इति उक्त्वा गतवान्।

किञ्चिद्दूरं यदा गतं, तदा भीमेन बकानां कलरवः श्रुतः। बकानां कलरवमेव अनुसृत्य गतवान् भीमः। अनतिदूरे एव कश्चन सरोवरः दृष्टः। भीमः तस्मिन् सरोवरे स्नानं कृत्वा ततः जलं स्वीकृत्य वटवृक्षसमीपम् आगतवान्। तावता सर्वे गाढनिद्रायां लीनाः आसन्।

एतादृशे आपत्काले अपि एते निरातङ्कं निद्रां कुर्वन्तः सन्ति इति यत्, तेन एते नितरां श्रान्ताः इति चिन्तितवान् भीमः। निद्रातः तान् उत्थापयितुम् अनिच्छन् सः तेषाम् उत्थानम् एव प्रतीक्षमाणः तत्रैव उपविष्टवान्।

वारणावतस्थं पाण्डवानां वासस्थानं दग्धम् अभवत् इति विषयः वारणावतनगरस्थैः सर्वैः ज्ञातः। सर्वे लाक्षागृहसमीपं गत्वा दृष्टवन्तः। तत् गृहम् इतोऽपि ज्वलत् एव आसीत्। तदा सुरङ्गनिर्माता अग्नेः निर्वापणव्याजेन इतस्ततः भस्म नुदन् बिलद्वारं भस्मना सम्यक् पिहितवान्। पुरोचनस्य परिचारिकायाः, तस्याः पञ्चपुत्राणां च शवाः अभिज्ञातुम् एव अशक्याः आसन्। एतत् दृष्ट्वा जनाः चिन्तितवन्तः यत् पाण्डवाः, कुन्ती, पुरोचनः च अस्मिन्



लाक्षागृहे दग्धाः अभवन् इति।

एषा वार्ता हस्तिनापुरस्थैः अपि ज्ञाता। कुन्ती पाण्डवाः च मृताः इति ज्ञात्वा धृतराष्ट्रः दुःखं सोढुम् अशक्तः मूर्च्छां गतः।

अन्येषां सन्देहः न भवेत् इत्यतः विदुरः अपि सर्वैः सह अश्रूणि स्रावितवान्।

पाण्डवैः श्रान्त्या यत्र शयितम् आसीत्, तस्मिन् अरण्ये हिडिम्बनामकः राक्षसः आसीत्। तस्य शरीरं कृष्णवर्णीयं बलयुतं च आसीत्। पीतवर्णीयं नेत्रद्वयम् आसीत्। लम्बमानं बृहद्गात्रम् उदरम् आसीत् हिडिम्बस्य। हिडिम्बः नरभक्षकः आसीत्। बुभुक्षया पीडितः सः अरण्ये सर्वत्र आहारम् अन्विष्टवान्। किन्तु कुत्रापि न लब्धम्। अतः पुनरपि स्ववासस्थानम् आगत्य वृक्षे

उपविश्य शिरसि कण्डूयनं कुर्वन् मुखं विशालीकृत्य जृम्भणं कुर्वन् परितः पश्यन् आसीत् । तदा तेन वटवृक्षस्य अधः सुप्ताः मनुष्याः पाण्डवाः दृष्टाः ।

एतस्मात् अतीव सन्तुष्टः हिडिम्बः अनुजां हिडिम्बाम् आहूय उक्तवान् - ''भगिनि ! बहुकालानन्तरं मानवाः लब्धाः सन्ति । अनतिदूरस्थस्य वटवृक्षस्य अधः केचन मानवाः निद्रां कुर्वन्तः सन्ति। भवती इदानीम् एव तत्र गत्वा तान् मारयित्वा अत्र आनयतु । अद्य आवाम् आकण्ठं मनुष्यमांसं खादित्वा सन्तोषेण नृत्यं करवाव'' इति ।

हिडिम्बस्य वचनानुसारं हिडिम्बा वटवृक्षसमीपं गतवती । तत्र च निद्रां कुर्वतः युधिष्ठिरम्, अर्जुनं, नकुलं, सहदेवं, कुन्तीं, तेषां रक्षकं भीमं च दृष्टवती । हिडिम्बया भीमः मन्मथसदृशः दृष्टः । भीमस्य दर्शनमात्रेण तस्मिन् अनुरक्ता जाता हिडिम्बा । भीमविषयकेण अनुरागेण सा अग्रजस्य हिडिम्बस्य वचनं पालयितुं न इष्टवती । 'यदि अहम् एतेषां मारणं न करोमि, तर्हि भीमं परिणीय तेन सह सुखेन जीवितुं शक्नोमि' इति विचिन्त्य हिडिम्बा सुन्दरस्त्रीरूपं प्राप्य लज्जाम् अनुभवन्ती मन्दहासं च प्रकटयन्ती भीमसमीपं गत्वा - ''महानुभाव ! भवान् कः ? कुतः आगतवान् भवान् ? अत्र निद्रां कुर्वन्तः एते के ? किमर्थम् अत्र आगताः भवन्तः ? सुन्दरी एषा वृद्धा का ? अस्मिन् अरण्ये हिडिम्बनामकः मम अग्रजः निवसति, स च बलवान् राक्षसः, अत्यन्तं क्रूरः च इति विषयं भवन्तः न जानन्ति वा ? सः हिडिम्बः स्वस्य आहारार्थं भवतां सर्वेषाम् आनयनार्थं माम् आदिष्टवान् अस्ति । अतः एव अहम् अत्र आगतवती । किन्तु भवतः सौन्दर्येण आकृष्टा अहं भवति अनुरक्ता जाता । अतः भवतः सर्वान् मारयितुं न इच्छामि अहम् । भवान् मां परिणीय मम इच्छां पूरयति चेत् अहं भवतः सर्वान् मनोवेगेन सुरक्षितं स्थलं प्रापयिष्यामि । अनन्तरम् आवाम् अन्ये च भवदीयाः सुखेन जीवितुं शक्नुमः । कृपया मम वचनं मा तिरस्करोतु'' इति उक्तवती ।



# तिन्त्रिणीवृक्षः

तिन्त्रिणीवृक्षस्य वायुः च्छाया च आरोग्यार्थं न हितकरं, किन्तु निम्बवृक्षस्य वायुः च्छाया च हिताय इति विषयः गतसञ्चिकायाम् अस्माभिः पठितः। तिन्त्रिणीवृक्षस्य विषये अन्या अपि काचित् कथा श्रूयते। केभ्यश्चित् शतकेभ्यः पूर्वं वङ्गदेशीयः सुप्रसिद्धः भक्तिमार्गबोधकः चैतन्यमहाप्रभुः वृन्दावनयात्रां गतवान्। सः वृन्दावनं प्राप्य कस्यचित् महातिन्त्रिणीवृक्षस्य अधः उपविश्य स्वकीयं प्रथमम् उपन्यासं कृतवान्। तस्मिन् एव प्रदेशे श्रीकृष्णः गाः पालयति स्म इति भक्तानां विश्वासः। सः प्रदेशः 'तैन्तुलतुला' (तिन्त्रिणीवृक्षस्य तलम्) इति नाम्ना प्रसिद्धः अस्ति। तिन्त्रिणीवृक्षः बङ्गालीभाषया 'तिन्तिल्' इत्युच्यते। चैतन्यमहाप्रभुः तस्मिन् एव प्रदेशे स्वजीवितकालं यापितवान् इत्यतः तत् स्थलं पवित्रस्थलत्वेन प्रसिद्धिं गतम्। सः वृक्षः अद्यापि जीवति इति श्रूयते। तिन्त्रिणीवृक्षः बहूनि वर्षाणि जीवति।

तिन्त्रिणी हिन्दीभाषया 'इमली' अथवा 'अम्ली' इति, मराठीभाषया 'अम्ली' इति, तमिळुभाषया, मलयालभाषया 'पुलि' इति च उच्यते।

तिन्त्रिणीपर्णानि आकारेण लघूनि भवन्ति। आरम्भे पर्णानि पीत-हरितवर्णीयानि भवन्ति। क्रमशः प्रौढतां प्राप्य हरितवर्णीयानि एव भवन्ति। पीत-हरितवर्णीयानि एतस्य पुष्पाणि गुच्छाकारकाणि भवन्ति। एतस्य फलानि दीर्घाणि वक्राणि च भवन्ति। एकैकस्मिन् फले ३-१० बीजानि भवन्ति। बीजानि परितः आम्लयुक्तः सारः भवति। कानिचन फलानि मधुराणि भवन्ति। यदा फलानि पक्वतां यान्ति, तदा आम्लसारं परितः विद्यमाना त्वक् दृढा भवति।



तिन्त्रिणी क्वथितं, सारः, व्यञ्जनम् इत्यादिषु उपयुज्यते। तिन्त्रिणीपर्णेषु, बीजेषु, सारे च औषधगुणाः सन्ति।

तिन्त्रिणीवृक्षस्य काष्ठम् अतीव दृढं भवति। अतः एतेन शकटचक्राणां निर्माणं कुर्वन्ति। एतस्य काष्ठम् अग्निज्वालनार्थम् अपि उपयुज्यते। च्छायानिमित्तं तिन्त्रिणीवृक्षं मार्गम् उभयतः अपि वर्धयन्ति अपि।

सुप्रसिद्धाः ऋषयः - १

# व सि ष्ठः

अस्माकं पूर्वजाः एव भारतीयनागरिकतायाः संस्कृतेश्च किञ्चन रूपं कल्पितवन्तः इति तु निर्विवादः अंशः । एते महानुभावाः ऋषयः ज्ञानार्जने एव स्वजीवनं यापितवन्तः । अपि च एते परिश्रमेण आत्मना सम्पादितं ज्ञानं, श्रद्धया भक्त्या च ये शिष्याः तान् आश्रयन्ति स्म, तादृशान् योग्यान् शिष्यान् बोधयन्ति स्म । एवंरीत्या ऋषयः एव प्रथमगुरवः सञ्जाताः । एते न केवलं राजकुमारान् बोधयन्ति स्म, अपि तु दरिद्रान् अपि शिष्यान् बोधयन्ति स्म । शिष्याः गुरोः आश्रमे एव स्थित्वा गुरुकुलपद्धत्या विद्याभ्यासं कुर्वन्ति स्म ।

प्राचीनकवयः वाल्मीकिव्यासादयः अपि ऋषयः एव । अस्माकं प्राचीनेषु ऋषिषु प्रमुखः वसिष्ठः । वसिष्ठः श्रेष्ठं ज्ञानं सम्पाद्य तद्द्वारा अपूर्वाः शक्तीः अपि सम्पादितवान् आसीत् । तथापि सः सामान्यकार्यार्थं तासां शक्तीनाम् उपयोगं न करोति स्म ।

कदाचित् विश्वामित्रनामकः महाराजः मृगयार्थम् अरण्यं गतवान् । कञ्चन कालं यावत् मृगयां कृत्वा श्रान्तः सः विश्रान्तिं स्वीकर्तुम् इच्छन् समीपस्थं वसिष्ठस्य आश्रमं गतवान् ।

मन्त्रिभिः, सेनाधिपतिभिः, अङ्गरक्षकैः सह सपरिवारम् आगतं महाराजं विश्वामित्रं वसिष्ठः सादरं स्वागतीकृतवान् ।

अनन्तरं विश्वामित्रः सपरिवारं स्नानार्थं समीपस्थां नदीं गतवान् । स्नानं समाप्य तेषाम् आगमनसमये एव वसिष्ठः मिष्टान्नभोजनं सज्जीकृतवान् आसीत् । एतत् दृष्ट्वा आश्चर्यचकितः विश्वामित्रः वसिष्ठं पृष्टवान् - ''अस्मिन् अरण्ये एतावच्छीघ्रम् एतादृशं मिष्टान्नभोजनं कथं सज्जीकृतवान् भवान् ?'' इति ।

तदा वसिष्ठः उक्तवान् - ''मत्सकाशे काचित् कामधेनुः अस्ति । अहं यत् पृच्छामि, तत् सा ददाति'' इति ।

अनन्तरं विश्वामित्रः वसिष्ठस्य आतिथ्ये भोजनं कृतवान् । किन्तु तस्य मनः कामधेनुविषयम् एव चिन्तयति स्म । प्रस्थानसमये विश्वामित्रः 'उपायनरूपेण कामधेनुं मह्यं ददातु' इति वसिष्ठं प्रार्थितवान् ।

किन्तु वसिष्ठः एतत् न अङ्गीकृतवान् । दैवांशसम्भूतायाः तस्याः कामधेनोः दानं कर्तुम् अधिकारः न आसीत् वसिष्ठस्य । सा कामधेनुः स्वेच्छया एव वसिष्ठस्य आश्रमे आसीत् ।

वसिष्ठः विश्वामित्रस्य आशयं न पूरितवान् इत्यतः विश्वामित्रः कुपितः । सः बलात् कामधेनुं नेतुम् इष्टवान् । किन्तु तदा कामधेनुतः सहस्राधिकाः सैनिकाः उत्पन्नाः सन्तः सपरिवारं विश्वामित्रं सम्यक् ताडितवन्तः ।

एतस्याः घटनातः विश्वामित्रः शारीरकबलस्य अपेक्षया अपि तपोबलम् एव श्रेष्ठम् इति ज्ञातवान् । अनन्तरं सः राज्यं परित्यज्य ब्रह्मर्षिः भवितुम् इच्छन् कठोरं तपः आरब्धवान् ।

तथापि वसिष्ठविषयकः विश्वामित्रस्य कोपः न शान्तः । अपि च वसिष्ठः विश्वामित्रस्य ब्रह्मर्षित्वम् न अङ्गीकृतवान् आसीत् । एतस्मात् विश्वामित्रस्य कोपः प्रवृद्धः । एतस्मात् एव ज्ञायते यत् - जन्मजातस्य स्वभावस्य परिवर्तनं महते क्लेशाय इति । मानवः केषुचित् विषयेषु विवेकेन औदार्येण च व्यवहरति चेदपि केषुचित् विषयेषु अविवेकिताम् आचरति इत्यत्र एतदेकम् उत्तमं निदर्शनम् ।

कदाचित् विश्वामित्रः दुर्बुद्ध्या वसिष्ठं मारयितुम् इच्छन् रहस्येन तस्य कुटीरसमीपं गतवान् । तस्मिन् समये वसिष्ठः, तस्य पत्नी च परस्परं सम्भाषमाणौ आस्ताम् । एतत् ज्ञात्वा विश्वामित्रः तत्रैव स्थितवान् ।

''भवता विश्वामित्रस्य ब्रह्मर्षित्वम् अङ्गीकृतं चेत् सः भवद्विषयकं द्वेषं त्यक्त्वा प्रीत्या व्यवहरति खलु ।'' इति पतिं पृष्टवती वसिष्ठस्य पत्नी ।

तदा वसिष्ठः उक्तवान् - ''विश्वामित्रेण स्वकठोरतपसा एतावता एव महत् साधितम् अस्ति । तथापि ब्रह्मर्षित्वस्य प्राप्त्यर्थं तेन इतोऽपि केचन उत्तमगुणाः सम्पादनीयाः । यदि इदानीम् एव अहं तस्य ब्रह्मर्षित्वम् अङ्गीकरोमि, तर्हि सः स्वप्रयत्नं परित्यजेत् । अतः अहं तस्य हितार्थम् एव एवं व्यवहरन् अस्मि'' इति ।

एतत् सम्भाषणं श्रुतवति विश्वामित्रे महत् परिवर्तनं जातम् । सः स्वदोषम् अवगत्य वसिष्ठं क्षमां प्रार्थितवान् ।

वसिष्ठस्य पत्नी अरुन्धती अपि महातपस्विनी आसीत् । तौ उभौ अपि मरणानन्तरं नक्षत्ररूपं प्राप्य आकाशम् आश्रितवन्तौ । आकाशे दृश्यमानस्य सप्तर्षिमण्डलस्य सप्तसु नक्षत्रेषु अन्यतमस्य नाम वसिष्ठः इति । तस्य समीपे एव अस्पष्टं प्रकाशमानं नक्षत्रम् एव 'अरुन्धती' नक्षत्रम् इत्युच्यते ।



# भवन्तः जानन्ति वा ?

१. रशियादेशे राजा राज्ञी च किमिति निर्दिश्यते ?
२. अस्माकं देशस्य इतिहासे १९४२ तमवर्षस्य अगस्त् ९ दिनाङ्कस्य वैशिष्ट्यं किम् ?
३. 'सुयेज्' कुल्या कदा निर्मिता ? एषा कुल्या कौ समुद्रौ योजयति ?
४. अस्माकं देशे प्रथमं कयोः धूमशकटनिस्स्थानकयोः मध्ये धूमशकटमार्गः निर्मितः ?
५. द्वितीयविश्वयुद्धस्य समये 'आक्सिस्' नाम्ना एकीभूताः त्रयः देशाः के ?
६. सः उत्सवः कः, यश्च अस्माकं देशे द्वादशवर्षेषु एकवारम् आचर्यते ?
७. प्रपञ्चस्य विशालतमः द्वीपः कः ?
८. अस्माकं देशे यदा क्रिकेट्स्पर्धा ऐदम्प्राथम्येन प्रवृत्ता तदा भारतीयगणस्य नायकः कः आसीत् ?
९. भूमेः शीतलतमः प्रदेशः कः ?
१०. ओलम्पिक्क्रीडायाम् अस्माकं देशस्य प्रतिनिधित्वेन भागं गृहीतवता केन प्रथमतया सुवर्णपदकं प्राप्तम् ? कदा ?
११. 'एलेक्ट्रिक् मोटार्' केन संशोधितम् ?
१२. 'प्रभातसूर्यभूमिः' इति प्रसिद्धिं गतः देशः कः ?
१३. डच्देशः यदा लघुवसतिप्रदेश(कालोनी) परिमितः आसीत्, तदा न्यूयार्क्नगरस्य नाम किम् आसीत् ?
१४. चीनादेशस्य प्रथमः चक्रवर्ती कः ?
१५. नोबेल्शान्तिपारितोषिकं प्राप्तवान् अमेरिकादेशीयः निग्रोनायकः कः ?
१६. 'एवरेस्ट्' शिखरम् आरूढवती प्रथमा महिला का ? कदा सा तत् शिखरम् आरूढवती ?

## उत्तराणि

१. जार्, जारिना चेति ।
२. क्विट् इण्डिया आन्दोलनस्य आरम्भः ।
३. १८६९ तमे वर्षे । रक्तसमुद्रं, मेडिटरेनियन् समुद्रं च योजयति ।
४. मुम्बयी-थाने निस्स्थानकयोः ।
५. जर्मनि, इटलि, जपान् च ।
६. कुम्भमेलम् ।
७. ग्रीन्ल्याण्ड् ।
८. सि. के. नायुडुवर्यः ।
९. अण्टार्टिकास्थं वोस्टाक् १९७५ तमे वर्षे निस्स्थानकम् । (८७.६ सेल्सियस्)
१०. नार्मन् प्रिट्चार्डवर्येण, १९०० तमे वर्षे ।
११. मैकेल् फ्याराडेवर्येण ।
१२. जपान् ।
१३. न्यू अम्सटर् डयाम् ।
१४. कुब्लेखान् (चङ्गेस्खानस्य पौत्रः)
१५. मार्टिन्लूथर् किङ्ग् जूनियर् ।
१६. जपान् देशीया जुङ्कोटाबे । मे १६ दिनाङ्के ।



# ज्ञानं पाण्डित्यं च

श्रीरङ्गपुरे पाण्डुरङ्गनामकः कश्चित् वणिक् आसीत् । तदीयं वाणिज्यं सम्यक् प्रचलति स्म । तस्य द्वौ पुत्रौ आस्ताम् । तयोः कस्यापि वाणिज्यविषये आसक्तिः न आसीत् ।

पाण्डुरङ्गस्य ज्येष्ठपुत्रः श्रीनाथः अत्यन्तं स्मरणशीलः आसीत् । प्रौढानाम् अपि ग्रन्थानां सकृत् पठनेन एव सः तत्रत्यान् विषयान् सम्यक् स्मरति स्म । तस्य इच्छा आसीत् - 'मया पण्डितेन भवितव्यम्' इति ।

श्रीनाथस्य अनुजः कमलनाभः अपि अधिकम् अध्ययनं कृत्वा पण्डितः भवितुम् इच्छति स्म । सः काव्यस्थान् श्लोकान् शब्दकोशसाहाय्येन पठन् स्वज्ञानदाहं निवारयति स्म ।

कदाचित् पाण्डुरङ्गस्य गृहं बृहस्पतिनामकः गुरुः आगतवान् । गुरुः बृहस्पतिः समीपस्थे अरण्ये किञ्चन गुरुकुलं चालयति स्म ।

पाण्डुरङ्गः बृहस्पतिं स्वपुत्रयोः आशयं निवेद्य उक्तवान् - ''मम पुत्रौ विद्यावन्तौ भवितुम् इच्छतः इति यत्, तेन ममापि सन्तोषः एव । किन्तु मम मरणानन्तरं मम वाणिज्यस्य उत्तराधिकारी कश्चित् आवश्यकः खलु ! अतः कृपया भवान् मम उभौ अपि पुत्रौ परीक्ष्य तयोः अन्यतरं वाणिज्यकार्यार्थम् सज्जीकरोतु'' इति ।

बृहस्पतिः पाण्डुरङ्गस्य वचनम् अङ्गीकृतवान् । अनन्तरं सः श्रीनाथं स्वसमीपम् आहूय तेन अधीतान् विषयान् ज्ञात्वा अतीव आश्चर्यचकितः । यतः श्रीनाथः बहूनां ग्रन्थानां सर्वान् अपि विषयान् सम्यक् स्मरति स्म ।

कमलनाभः यद्यपि बहून् ग्रन्थान् पठितवान् आसीत्, तथापि तेन एकः अपि



तयोः शिक्षणं दास्यामि '' इति।

एतत् श्रुत्वा पाण्डुरङ्गः आश्चर्येण उक्तवान् - ''मम ज्येष्ठपुत्रः यं कमपि विषयं सुलभतया कण्ठस्थीकरोति । तादृशः सामर्थ्यवान् वणिक् भविष्यति इति, द्वितीयः सामान्यज्ञानवान् अपि पण्डितः भविष्यति इति च वदति खलु भवान्! भवान् एतद्विषये गभीरतया चिन्तनं न कृतवान् इति भाति'' इति।

तदा बृहस्पतिः मन्दहासपूर्वकम् उक्तवान् - ''एषः विषयः मया गम्भीरतया एव चिन्तितः इति दिनद्वयाभ्यन्तरे भवान् एव ज्ञास्यति। अत्रान्तरे अहं भवतः किमपि साहाय्यं कर्तुम् इच्छामि । अहं वैद्यकीयम् अपि किञ्चित् जानामि । भवतः गृहे यः कोऽपि यदि केनचित् विचित्ररोगेण पीड्यमानः अस्ति, तर्हि वदतु माम्। अहम् औषधं दास्यामि'' इति।

पाण्डुरङ्गः गृहसदस्यान् एकत्र मेलयित्वा बृहस्पतेः वचनं तान् उक्तवान्। सर्वे अपि स्वस्य अनारोग्यविषयम् उक्तवन्तः । तेषु पाण्डुरङ्गस्य मातुः रोगः विचित्रः आसीत्। मार्जारस्य दर्शनमात्रेण सा शिरोवेदनापीडिता भवति स्म। मार्जारस्य निर्गमनानन्तरं तस्याः शिरोवेदना स्वयम् अपगता भवति स्म।

एतत् श्रुत्वा बृहस्पतिः ताडपत्रे किमपि लिखित्वा तत् ताडपत्रं पाण्डुरङ्गाय यच्छन् उक्तवान् - ''भवतः मातुः रोगस्य चिकित्साक्रमः अत्र मया लिखितः अस्ति।

ग्रन्थः समग्रं न पठितः आसीत्।

एतत् ज्ञात्वा बृहस्पतिः कमलनाभम् उक्तवान् - ''एकः अपि ग्रन्थः पूर्णतया न पठितः भवता इत्यतः भवतः ज्ञानम् अपूर्णम् एव'' इति।

तदा कमलनाभः उक्तवान् - ''स्वामिन्! समग्रस्य ग्रन्थस्य पठने मम सामर्थ्यं नास्ति। अतः यत्र मम आसक्तिः अस्ति, तान् विषयान् केवलं परिश्रमेण पठन् अस्मि'' इति।

अनन्तरं बृहस्पतिः पाण्डुरङ्गम् उद्दिश्य उक्तवान् - ''भवतः ज्येष्ठपुत्रः वाणिज्यकार्यार्थं योग्यः अस्ति । द्वितीयः पण्डितः भविष्यति। तथापि उभौ अपि अहं मम आश्रमं नेष्यामि। कञ्चन कालं यावत्

रात्रिसमये भवान् एकान्ते एतत् पठित्वा एतस्य अर्थं जानातु । श्वः पुनः आवां यदा मेलिष्यावः, तदा एतद्विषये भवता ज्ञातम् अंशं मां वदतु । तावत्पर्यन्तम् अपि एतद्विषये केनापि सह भवता चर्चा न करणीया'' इति ।

अनन्तरं बृहस्पतिः श्रीनाथाय, कमलनाभाय च एकैकं ताडग्रन्थं यच्छन् उक्तवान् - ''वैद्यशास्त्रसम्बद्धं ग्रन्थद्वयं मम समीपे आसीत् । तत् भवद्भ्यां यच्छन् अस्मि । भवन्तौ रात्रिसमये एतं ग्रन्थं पठित्वा विषयान् ज्ञातुं प्रयत्नं कुरुताम्'' इति ।

अनन्तरदिने सर्वे अपि एकत्र मिलितवन्तः । प्रथमं पाण्डुरङ्गः बृहस्पतिम् उक्तवान् - ''स्वामिन् ! अहं संस्कृतभाषां न जानामि । अतः ताडपत्रे संस्कृतेन यत् लिखितं, तत् पठितुं न शक्तवान् अहम्'' इति ।

बृहस्पतिः मन्दहासपूर्वकं श्रीनाथं दृष्टवान् । श्रीनाथः अभिमानेन उक्तवान् - ''अहं ग्रन्थम् आमूलाग्रं पठितवान् अस्मि'' इति ।

तदा बृहस्पतिः भिन्नभिन्नप्रकारेण तस्य परीक्षां कृत्वा साभिमानम् उक्तवान् - ''भवता महत् साधितम् । यतः एकदिनाभ्यन्तरे एतावतः कण्ठस्थीकरणं न सुलभम्'' इति ।

अनन्तरं बृहस्पतिः कमलनाभं प्रश्नार्थकदृष्ट्या दृष्टवान् ।

तदा कमलनाभः शिरः अवनमय्य सविनयम् उक्तवान् - ''ग्रन्थस्था भाषा अतीव प्रौढा अस्ति । अतः अत्रत्यान् विषयान्



सम्यक् ज्ञातुं न शक्तः अहम् । किन्तु अस्मिन् ग्रन्थे कुत्रचित् मम पितामह्याः रोगसम्बन्धिचिकित्साक्रमविषयः दृष्टः मया । तं विषयम् अहं शब्दकोशसाहाय्येन ज्ञातवान् । उद्याने यानि मूलिकापर्णानि भवन्ति तैः एव तस्याः रोगः शमयितुं शक्यः इति अहं चिन्तयामि'' इति ।

एतस्मात् अतीव सन्तुष्टः बृहस्पतिः पाण्डुरङ्गम् उक्तवान् - ''महती स्मरणशक्तिः एव वणिजां प्रयोजनाय भवति । अतः श्रीनाथं मया सह नीत्वा, सः वाणिज्ये यथा समर्थः स्यात्, तथा तस्मै शिक्षणं दास्यामि । कमलनाभः तु महान् पण्डितः भविष्यति इति मम विश्वासः अस्ति । पाण्डित्य-सम्पादनार्थं कमलनाभस्य साहाय्यकरणम् अपि मम एव दायित्वम्'' इति ।

एतत् श्रुत्वा श्रीनाथः - 'अहं पण्डितः भवितुम् इष्टवान् । भवतः एषः निर्णयः न समीचीनः । कृपया माम् अपि पण्डितं करोतु' इति बृहस्पतिं प्रार्थितवान् ।

तदा बृहस्पतिः गम्भीरस्वरेण - ''मया कृतः निर्णयः उचितः इति न्यूनातिन्यूनं भवतः पिता वा ज्ञातवान् स्यात्'' इति वदन् पाण्डुरङ्गं दृष्टवान् ।

बृहस्पतेः भावम् अवगत्य पाण्डुरङ्गः क्षणकालं विचिन्त्य उक्तवान् - ''श्रीनाथः स्वस्मरणशक्तेः आधारेण ग्रन्थस्थान् सर्वान् अपि विषयान् जीर्णीकरोति । किन्तु तेन किं प्रयोजनम् ? आत्मना पठिते ग्रन्थे पितामह्याः रोगस्य चिकित्साक्रमविषयः अस्ति इत्यपि तेन न ज्ञातम् । पाण्डित्यहीनस्य ज्ञानम् अपि व्यर्थम् इति श्रीनाथेन स्पष्टीकृतम् अभवत् । सन्दर्भानुगुणं विषयं ज्ञातवान् कमलनाभः एव पण्डितः भवितुं योग्यः इति निदर्शनपूर्वकम् अस्मान् बोधितवतः बृहस्पतेः विषये अस्माभिः सर्वैः कृतज्ञैः भवितव्यम्'' इति ।

अनन्तरं पाण्डुरङ्गस्य मातुः चिकित्सा कृता । बृहस्पतिसकाशात् शिक्षणं प्राप्य श्रीनाथः प्रसिद्धः वणिक् जातः । कमलनाभः च सुविख्यातः पण्डितः जातः । कालक्रमेण उभौ अपि कीर्तिं प्राप्तवन्तौ ।





# मत्स्यचोरः

धीवरः सोमनाथः न बुद्धिमान्। अतः तस्य पत्नी नागवेणी एव स्वचातुर्येण कुटुम्बनिर्वहणं करोति स्म। सोमनाथः समुद्रं गत्वा मत्स्यान् गृह्णाति स्म। तेन प्राप्तानां मत्स्यानां विक्रयणेन यत् धनं प्राप्यते, तेन धनेन नागवेणी कुटुम्बनिर्वहणं करोति स्म।

कदाचित् सोमनाथः पत्नीम् उक्तवान् - "अद्य मत्स्यविक्रयणं मास्तु। भोजनार्थं मत्स्यकथितं करोतु" इति।

पत्न्या बहुधा बोधितः चेदपि सोमनाथः तस्मिन् दिने मत्स्यविक्रयणं न अङ्गीकृतवान्।

तदा अनन्यगतिका नागवेणी पतिम् उक्तवती - "एवं तर्हि एतान् मत्स्यान् नीत्वा स्वच्छं प्रक्षाल्य आगच्छतु, येन मत्स्यगन्धः पूर्णं गच्छेत्" इति।

एतस्मात् अतीव सन्तुष्टः सोमनाथः मत्स्यान् कण्डोले संस्थाप्य क्षालनार्थं तटाकं प्रति प्रस्थितः। मध्येमार्गम् अभिमुखम् आगतः वीरभद्रः सोमनाथं पृष्टवान् - "किं भोः! कुत्र गच्छति भवान्?" इति।

"एतान् मत्स्यान् क्षालयितुं तटाकं प्रति गच्छन् अस्मि। गन्धः यथा न भवेत् तथा प्रक्षाल्य आनयतु इति मम पत्नी माम् उक्तवती अस्ति" इति उक्तवान् वीरभद्रः।

तदा - "क्षालनमात्रेण मत्स्यगन्धः न अपगच्छति। क्षालयित्वा मत्स्याः शोषणीयाः। मत्समीपे चत्वारः शुष्कमत्स्याः सन्ति। भवदीयान् आर्द्रमत्स्यान् मह्यं ददातु। मदीयान् शुष्कमत्स्यान् भवते दास्यामि अहम्" इति उक्तवान् वीरभद्रः।

एतत् श्रुत्वा सोमनाथः स्वमत्स्यकण्डोलतः चतुरः मत्स्यान् वीरभद्राय दत्तवान्। ततश्च चतुरः शुष्कमत्स्यान् स्वीकृतवान्।

ततः उभौ अपि निर्गतौ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



वस्तुस्थितिः एषा - तस्मिन् दिने नौकास्थानम् आगतस्य कस्यचित् वणिजः नौकातः वीरभद्रः चतुरः शुष्कमत्स्यान् चोरितवान् आसीत् । चौर्यं यदा वणिजा ज्ञातम् अभवत्, तदा वीरभद्रः चिन्तितवान् - 'स्वसमीपे शुष्कमत्स्यानां स्थितिः न क्षेमाय' इति । तस्मिन् सन्दर्भे अकस्मात् मिलितस्य सोमनाथस्य मुग्धतायाः सदुपयोगं स्वीकुर्वन् वीरभद्रः शुष्कमत्स्यान् सोमनाथाय दत्तवान् आसीत् ।

सोमनाथः गृहं गत्वा शुष्कमत्स्यान् पत्न्यै दत्त्वा उक्तवान् - "एतेन कथितं करोतु" इति ।

"भवता नीताः आर्द्रमत्स्याः कुत्र ?" इति पृष्टवती नागवेणी आश्चर्येण ।

तदा सोमनाथः प्रवृत्तं सर्वं पत्नीं निवेदितवान् ।

पत्युः चातुर्येण नागवेणी सन्तुष्टा । नागवेणी कथितार्थम् एकं मत्स्यं गृहे संस्थाप्य अवशिष्टान् त्रीन् मत्स्यान् पत्यै दत्त्वा उक्तवती - 'एतान् विक्रीय आगच्छतु' इति ।

सोमनाथः तान् मत्स्यान् स्वीकृत्य ग्रामस्य अन्तः गतवान् ।

सोमनाथस्य गमनानन्तरं नागवेणी शुष्कमत्स्यं कर्तितवती । मत्स्यस्य उदरे प्रकाशमानं किञ्चन वज्रम् आसीत् ।

शुष्कमत्स्यानां स्वामी वणिक् स्वसमीपे विद्यमानानि कानिचन वज्राणि चोरभयात् शुष्कमत्स्यानाम् उदरे रहस्येन स्थापितवान् आसीत् । नौकास्थानस्य प्राप्त्यनन्तरं केषुचित् एव क्षणेषु वणिक् ज्ञातवान् यत् - चत्वारः मत्स्याः न दृश्यन्ते इति ।

अनुक्षणं सः वणिक् महाराजस्य समीपं गत्वा तं निवेदितवान् - "प्रभो ! मम नौकास्थाः चत्वारः शुष्कमत्स्याः न दृश्यन्ते । मत्स्यानाम् अन्तः मया वज्राणि रहस्येन स्थापितानि आसन्" इति ।

एतत् श्रुत्वा राजा - 'शुष्कमत्स्याः येषां समीपे भवन्ति, तान् गृहीत्वा आनयन्तु' इत्युक्त्वा भटान् प्रेषितवान् । भटैः सोमनाथः प्राप्तः । ते सोमनाथं राज्ञः समीपम् आनीतवन्तः । सोमनाथसमीपस्थान् शुष्कमत्स्यान् दृष्ट्वा वणिक् महाराजम् उक्तवान् - "एते मत्स्याः मदीयाः एव । यदि भवतः सन्देहः स्यात्, तर्हि एतान् कर्तयतु"

इति।

महाराजः तेषां मत्स्यानां कर्तनं कारितवान्। त्रिषु मत्स्येषु अपि अमूल्यानि वज्राणि आसन्। "इतोऽपि एकः मत्स्यः स्यात्। यतः मदीयाः चत्वारः मत्स्याः न दृश्यन्ते" इति उक्तवान् वणिक्।

महाराजः सोमनाथं पृष्टवान् - "भवान् एतान् मत्स्यान् एतस्य वणिजः नौकातः चोरितवान् वा?" इति।

तदा सोमनाथः उक्तवान् - "नौकाविषयम् अहं किमपि न जानामि। वीरभद्रः मत्तः चतुरः आर्द्रमत्स्यान् स्वीकृत्य चतुरः शुष्कमत्स्यान् मह्यं दत्तवान् अस्ति। चतुर्षु एकं मत्स्यं पत्न्यै दत्त्वा 'क्वथितं करोतु' इति उक्त्वा अवशिष्टान् त्रीन् विक्रेतुम् आगतवान् आसम् अहम्" इति।

अनन्तरं राजा भटान् सोमनाथस्य गृहं सम्प्रेष्य मत्स्योदरस्थं वज्रम् आनायितवान्, अनन्तरं राजा वीरभद्रम् आनाय्य तं पृष्टवान् - "एते शुष्कमत्स्याः भवता दत्ताः वा?" इति। वीरभद्रः 'न' इति उक्तवान्।

तदा राजा - "एतेषु मत्स्येषु वज्राणि आसन्। सोमनाथेन उक्तम् - "एते मत्स्याः भवता एव दत्ताः इति। एवं तर्हि एतानि वज्राणि भवदीयानि न इति तु निर्णीतम्" इति उक्तवान्।

अनन्तरं राजा सोमनाथम् उद्दिश्य - "सोमनाथ! एतानि वज्राणि भवदीयानि एव। स्वीकरोतु भवान्" इति उक्तवान्।

एतत् श्रुत्वा वीरभद्रः अनुक्षणम् उक्तवान् - "महाराज! ते शुष्कमत्स्याः मया एव सोमनाथाय दत्ताः। ततः वज्राणि प्राप्तानि चेत् न्याय्यरूपेण तानि मदीयानि एव भवेयुः" इति।

एतस्मात् वीरभद्रः एव चोरः इति निर्णीतम् अभवत्। राजा वीरभद्रस्य दण्डनं विहितवान्, वणिजे वज्राणि दत्तवान् च।

एतस्मात् सन्तुष्टः वणिक् धन्यताभावेन सोमनाथाय किञ्चित् धनं दत्तवान्। सोमनाथः सन्तोषेण धनं स्वीकृत्य गृहं प्रति गतवान्, तृप्त्या आकण्ठं मत्स्यक्वथितयुक्तं भोजनं कृतवान् च।



# श्वः जलं न आगमिष्यति

| | |
|---|---|
| सुशीला - नलिनि, नलिनि ! | Nalini, hi Nalini. |
| नलिनी - आगच्छतु अन्तः । पाकशालायाम् अस्मि अहम् । | Come in, I am in the kitchen. |
| सु - किं कुर्वती अस्ति भगिनि ? | What are you doing ? |
| न - जलस्य सङ्ग्रहणं कुर्वती अस्मि । | I am collecting and stroing water. |
| सु - जलस्य सङ्ग्रहणं वा ? किमर्थं तावत् जलम् आवश्यकम् ? | Why so much of water ? |
| न - भवती विषयं न जानाति ? श्वः जलं न आगमिष्यति । तदर्थम् अद्य एव सङ्गृह्य स्थापयन्ती अस्मि । | Do't you know, there will be no water supply tomorrow ? I am storing for tomorrow's needs. |
| सु - एवं वा ? भवती कथं ज्ञातवती - जलं न आगमिष्यति श्वः इति ? | Is that so ? How did you know water will not be supplied tomorrow ? |
| न - अद्यतनपत्रिकायां वार्ता अस्ति । भवती पत्रिकां न पठितवती वा ? | It is in today's paper ! You didn't read the paper today ? |
| सु - नैव भगिनि । अद्य पत्रिका एव न पठिता मया । अहम् आगच्छामि नलिनि ! मया अपि जलं सङ्ग्रहणीयं खलु ! | No, I didn't read today's newspaper. Well Nalini, I am going. I will also collect water. |
| न - भवतु । श्वः पुनः आगच्छतु । | O.K., come again later. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अभिज्ञानम् - | Recollection | परिचारिका - | Maid Servant |
| अर्गलम् - | Bolt | पितामही - | Father's mother |
| अस्थीनि - | Bones | प्रतिमा - | Statue |
| आतपः - | Sunshine | बिलम् - | Burrow |
| इष्टिका - | Brick | भित्तिः - | Wall |
| उद्बन्धः - | Noose | मत्स्यः - | Fish |
| उभयतः - | From both sides | मृगया - | Hunting |
| कुटीरम् - | Hut | मेषः - | Sheep |
| कुल्या - | Canal | लाक्षा - | Lac |
| क्वथितम् - | A Sauce like preparation | वज्रम् - | Diamond |
| जामाता - | Son-in-law | वटवृक्षः - | Banian Tree |
| तटाकः - | Lake | वणिक् - | Merchant |
| ताडपत्रम् - | Palm leaf | वाणिज्यम् - | Business |
| तिन्त्रिणी - | Tamarind | वीथी - | Street |
| तीर्णवन्तः - | Crossed | व्यञ्जनम् - | Curry |
| तुला - | Weighing instrument | व्याधः - | Hunter |
| धीवरः - | Fisherman | व्रणितः - | Wounded |
| निस्स्थानकम् - | Station | शकटः - | Cart |
| नौका - | Boat | शूलम् - | Spear |
| पटगृहम् - | Tent | हिक्का - | Hiccup |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां जुलै - १९९५ मासे प्रकटयिष्यामः ।**



Taji Prasad



Taji Prasad

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे - २० तः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । • अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

---

**'मार्च्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **निर्माणकौशलप्रवृत्त्या प्राप्यते पटुत्वम् ।**

द्वितीयचित्रम् - **सदाध्ययनप्रयत्नात् साध्यते बुधत्वम् ।**

प्रेषकः - प. सत्यनारायणमूर्तिः, १३-४-४(३) पद्मसालील वीथी, भीमावरम् (आ.प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्स्, वडपळनी, मद्रास् - ६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# १० अंतर बताओ





जवाब:

१. फूलों की पंखुड़ियां ज्यादा है.
२. तोते की चोंच खुली है.
३. तोते की गर्दन पर लाल पट्टी है.
४. लड़की की आंखें खुली हैं.
५. लड़की मुस्कुरा रही है.
६. फ्रॉक पर सितारे बने हैं.
७. लड़की के सैंडल पर हीरे जड़े हैं.
८. कुत्ते की जीभ बाहर है.
९. प्लेट पर पारले का नाम लिखा है.
१०. प्लेट में मैंगोबाइट रखी है.